ISSN-2394-2436

# श्रीदेवयानः

सत्यमेव जयते नानृतं
सत्येन पन्था विततो
देवयानः।।




धर्मशास्त्रविभागः
केन्द्रीयसंस्कृतविश्वविद्यालयः
(प्राक्तनं राष्ट्रियसंस्कृतसंस्थानम्, मानितविश्वविद्यालयः)
भारतसर्वकारस्य मानवसंसाधनविकासमन्त्रालयाधीनः,
श्रीसदाशिवपरिसरः, पुरी, उत्कलाः

२०१९-२०

## विभागी[illegible]कर्मचारिणः



**डॉ. मनोजकुमारसाहुः**

डॉ. साहुः नवदेहलीस्थराष्ट्रीयसंस्कृतसंस्थानस्य धर्मशास्त्रविषये आयोजितायामन्तर्वीक्षायां
योग्यविवेचितो भूत्वा जयपुरपरिसरे धर्मशास्त्रविभागस्य सहायकाचार्यपदे नियुक्तः ।

# श्रीदेवयानः

## धर्मशास्त्रविभागः

## राष्ट्रियवार्षिकशोधपत्रिका

**ANNUAL NATIONAL RESEARCH JOURNAL**

**2020**


सम्पादकः

**प्रो. ललितकुमारसाहुः**

विभागाध्यक्षः

सहसम्पादकौ

**डॉ. प्रियरञ्जनरथः**

**डॉ. सिद्धार्थशंकरदाशः**





**केन्द्रीयसंस्कृतविश्वविद्यालयः**

संसदः अधिनियमेन स्थापितः

(प्राक्तनं राष्ट्रियसंस्कृतसंस्थानम्, मानितविश्वविद्यालयः)

भारतसर्वकारस्य मानवसंसाधनविकासमन्त्रालयाधीनः,

श्रीसदाशिवपरिसरः, पुरी, उत्कलाः

ISSN-2394-2436

# श्रीदेवयानः

## धर्मशास्त्रविभागीयवार्षिकशोधपत्रिका

DEPARTMENTAL ANNUAL NATIONAL RESEARCH JOURNAL

2020

उपदेष्टा - प्रो. खगेश्वरमिश्रः (निद्देशकः)
वरिष्ठाचार्यः - प्रो. अतुलकुमारनन्दः
सम्पादकः - प्रो. ललितकुमारसाहुः (विभागाध्यक्षः)
सहसम्पादकौ - डॉ. प्रियरञ्जनरथः, सहायकाचार्यः
डॉ. सिद्धार्थशङ्करदाशः, सहायकाचार्यः

प्रकाशकः - धर्मशास्त्रविभागः,
केन्द्रीयसंस्कृतविश्वविद्यालयः
श्रीसदाशिवपरिसरः,पुरी, उत्कलाः
सर्वस्वत्वसंग्रक्षणम् - पुरीस्थस्य श्रीसदाशिवपरिसरस्य धर्मशास्त्रविभागस्य
सङ्गणकसहायकः - श्रीप्रतापकुमारमेकापः
मुद्रणालयः - एस्. एस् प्रिण्टर्स, पुरी - २
प्रतिलिपयः - २००

*Prof. Khageswar Mishra*
DIRECTOR

Acharya (Dharma Shastra)
Shiksha-Shastri (B.Ed.)
Vidyavaridhi (Ph.D.)
Vidyavachaspati (D.Litt.)

**CENTRAL SANSKRIT UNIVERSITY**
Established by an Act of Parliament
(Formerly Rashtriya Sanskrit Sansthan, Deemed to be University)
Under Ministry of Human Resource Development, Govt. of India
Shree Sadashiva Campus
Puri - 752001 (Odisha)
Ph. : (06752) 223439 (O)
Mobile : 7377149822



*D.O. No..........* *Date ..............*

# शुभाशंसनम्

धर्मशास्त्रमतीवपवित्रतमम् आर्ययुष्टं च शास्त्रम् । साक्षाद् भगवती श्रुतिरपि धर्मं प्रशंसति ''धर्मो विश्वस्य जगत: प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पापमपनुदति धर्मे सर्वं प्रतिष्ठितम् । तस्माद्धर्मं परमं वदन्ति ।'' इति धर्मप्रशंसया तत्प्रतिपादकं शास्त्रमपि प्रशंसितम् । लोकद्वयकल्याणाय तदवश्यमेवाध्येतव्यम् । धर्मशास्त्रमधीयाना: स्वयं विशुद्धा: सन्त: अन्यानपि विशुद्धान् कृत्वा स्ववंशस्य स्वराष्ट्रस्य च कल्याणं साधयेयु: । धर्म: प्रवृत्त-निवृत्तभेदेन द्विविध: । प्रवृत्तधर्मेण मानव: पितृयानमार्गेण स्वर्गं गत्वा तत्र सुखमनुभूय क्षीणे पुण्ये पुनरिहलोकं प्रत्यावर्त्तते । परन्तु निवृत्तधर्मेण देवयानमार्गमासाद्य सूर्यमण्डलं भित्वा परमे ब्रह्मणि लीयते । देवयानमार्गलाभ: धर्मस्य सर्वोत्तमं फलम् इति कृत्वा धर्मशास्त्रविभागीयवार्षिकशोधपत्रिकाया: नाम ''श्रीदेवयान'' इति कृतम् । ''स्वाध्यायोऽध्येतव्य'' इति श्रुतिवाक्यं मनसि निधायास्माकं श्रीसदाशिवपरिसरस्य धर्मशास्त्रविभागीयच्छात्रै: आचार्यैश्च बहूनि गूढतत्त्वानि विभिन्नेभ्य: शास्त्रेभ्य: सङ्कलय्य ऐषम: ऐदं प्राथम्येन २०२० तमे वर्षे संसद: अधिनियमेन स्थापितस्य केन्द्रीयसंस्कृतविश्वविद्यालयस्य प्रथमाङ्कत्वेन ''श्रीदेवयाना''भिधा इयं या धर्मशास्त्रविभागीयशोधपत्रिका प्राकाश्यं नीयत इति ज्ञात्वाऽऽनन्दमनुभवामि । शोधपत्रिकायारस्या: सुष्ठुसम्पादितवतां विभागस्य विद्वत्तल्लजानां कृते कृतवेदितां विज्ञाप्यास्या: प्रचारं प्रसारञ्च कामये । अनेन प्रयासेन शास्त्रजिज्ञासव: छात्रा: नूनमुपकृता: भवेयुरिति आशास्महे ।।

निर्देशक:

खगेश्वरमिश्र:

**प्रो. खगेश्वरमिश्र:**

# संपादकीयम्

भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः ।
बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः ।।

अर्थाद्भूतानां स्थावरजङ्गमानां मध्ये प्राणिनः कीटादयः श्रेष्ठाः । तेषामपि बुद्धिजीविनः पशवः श्रेष्ठः । तेभ्योऽपि प्रकृष्टज्ञानसंबन्धात् मनुष्याः: श्रेष्ठाः । तेभ्योऽपि सर्वपूज्यत्वादपवर्गाधिकारयोग्यत्वाच्च ब्राह्मणाः श्रेष्ठाः कथिताः । तेषु ब्राह्मणेषु महाफलज्योतिष्ठोमादिकर्माधिकारित्वाद्विद्वांसः श्रेष्ठः । तेभ्योऽपि कृतबुद्धयः (शास्त्रोक्तानुष्ठानेषूत्पन्नकर्तव्यता बुद्धयः) श्रेष्ठाः विवेचिताः । तेभ्योऽपि हिताहितप्राप्तिपरिहारभागित्वादनुष्ठातारः श्रेष्ठाः कथिताः । तेभ्योपि मोक्षलाभाद्ब्रह्मविदः श्रेष्ठाः इति मनुनोक्तं-

ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः ।
कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवेदिनः ।।(१/९७)

अस्माद् मनुवचनात्कर्तृपदेन आचारवानेवावबोध्यते । यतः आचारः सदाचारो निगद्यते, तस्मात्सदाचारिणः महत्त्वं सर्वत्राद्रियते । किञ्च सदाचारे सद्गुणानां समोवेशः प्राप्यते । वाक्कायमनोभिः सुसंयतः, सदिचारवान् कथितः । पुनश्च आचार एव सदाचारशिक्षणेन शारीरिक-बौद्धिक-मानसिकोन्नतिप्रदानेन जगदिदं विभर्त्ति । तस्मात्कारणात् प्रत्येकं जनः आचारशिक्षापूर्वकं सदाचारिभूत्वा आत्मकल्याणेन सह समाजकल्याणमपि कुर्यात् । यत उक्तमति मनुना 'आचरेण संयुक्तः सर्वां सिद्धिं समधिगच्छति' ।(१/१०९)

भारतीया संस्कृतिः सुमहनीया, या संस्कृतमेवाश्रयते । संस्कृतप्रतिपादितानि शस्त्रिाणि मानवाय सर्वविधां शिक्षां प्रयच्छन्ति । तानि पठित्वा समुचितेन मार्गेण गत्वा जीवनमतिवाहयेत् । एवं मार्गमाश्रयितुं राष्ट्रियसंस्कृतसंस्थानान्तर्गतस्य पुरीस्थश्रीसदाशिवपरिसरस्य धर्मशास्त्रविभागपक्षतः 'देवयान'नामधेयपत्रिका बहूनि वर्षाणि प्रकाश्यते । अस्यां पत्रिकायां न केवलं परिसरीयाणामध्यापकानां छात्राणाञ्च शोधलेखाः प्रकाश्यन्तेऽपि तु भारतवर्षस्य नैकेषां विदुषां गवेषणापूर्णलेखाः स्थानिता भवन्ति । यान् पठित्वा छात्रा उपकृता भवन्ति । अतः पत्रिकायाः कृते संदेशं प्रदायानुगृहीतवतां परिसरस्य निर्देशकानामाचार्याणां खगेश्वरमिश्रमहोदयानां कृते विभागः कृतज्ञतां व्याहरति । प्रकाशनकर्मणि विभागीयवरिष्ठाचार्याणामाचार्यातुलकुमारनन्दमहोदयानां सहभागिता प्रशंसनीया, अतो विभागस्तानपि साधुवादान् ज्ञापयति । कर्मण्यस्मिन् ययोरध्यापकयोः समधिकमवदानं, तौ डॉ. प्रियरञ्जन-सिद्धार्थशङ्करौ, यौ धन्यवादार्हौ, कारणं ताभ्यामेव लेखसंग्रहादारभ्य प्रकाशनसमाप्तिं यावत्सर्वविधं कार्यं प्रत्यक्षीकृतम् । पत्रिकाया अस्या टङ्कणकार्यादारभ्य प्रकाशनान्तं यावद्विभागीय 'डिइओ' प्रतापकुमारमेकापः बहुसाहाय्यं करोति, अतो विभागः तमपि अभिनन्दति । सारस्वरकर्मण्यस्मिन् शोधछात्राणां साहाय्यमपि श्लाघनीयमतस्तेऽपि धन्यवादयोग्याः ।

परिशेषे पत्रिकायाः अस्या निर्विघ्नप्रकाशनमिच्छन् भगवतः श्रीजगन्नाथस्य चरणकमलयोः भक्तिकुसुमाञ्जलिं समर्पयामि ।

इति

देवस्नानपूर्णिमा

आचार्यललितकुमारसाहुः

# विभागाध्यक्षचराणां स्मृतिचिह्नानि



प्रधानाचार्यपण्डितश्रीआनन्दमिश्रः
(०९/०७/१९२०-२२/[illegible])



पण्डितश्रीकुलमणिमिश्रशर्मा
(१६/०७/१९४५-३०/०४/१९७९)



आचार्यवाचस्पतिशर्मत्रिपाठी
(१९७९-१९८२)



आचार्यकिशोरचन्द्रमहापात्रः
(१९८२-१५/०३/१९९०)

# विभागीयकर्मचारिणः



आचार्यः ललितकुमारसाहुः
विभागाध्यक्षः



प्रो. अतुलकुमारनन्दः
वरिष्ठाचार्यः



सहायकाचार्यः
**डॉ.प्रियरंजनरथः**



सहायकाचार्यः
**डॉ. मनोजकुमारसाहुः**



सहायकाचार्यः
**डॉ. सिद्धार्थशङ्करदाशः**



सङ्गणकसहायकः
**प्रतापकुमारमेकापः**

# विषयानुक्रमणिका





# 'श्रीजगन्नाथसंस्कृते: प्रचाराय प्रसाराय च मुक्तिचिन्तामणेर्योगदानम्'

प्रो. खगेश्वरमिश्र:

पुरुषोत्तमक्षेत्रे भगवतो जगन्नाथस्य दर्शनेन तत्क्षेत्रे महोदध्यादिपञ्चतीर्थेषु स्नानेन तदीयद्वादशयात्रासाक्षात्कारेण च मुक्ति: प्राप्यत इति नानाधर्मशास्त्रपुराणागमादिग्रन्थपर्यालोचनेन अखण्डास्तिकबुद्ध्योत्कलगजपतिना राज्ञा पुरुषोत्तमदेवेन श्रीपुरुषोत्तममाहात्म्यापरपर्यायत्वेन मुक्तिचिन्तामणिर्नाम ग्रन्थो व्यरचि । श्रीजगन्नाथतत्त्वमाधारीकृत्य संस्कृतेन बहूनि पुराणानि, शास्त्राणि, काव्यानि, नाटकानि तथा स्त्रोत्राणि विभिन्नेषु समयेषु विरचितानि तेषु अनेकानि प्रकाशितानि, अनेकानि अद्यावधि अप्रकाशितानि च। कानिचित् बहो: कालात्प्रकाशितान्यपि दुर्ल्लभानि भवन्ति ।श्रीजगन्नाथसंस्कृति: यथा प्राचीना तथैव तत्सम्बन्धितानि बहूनि शास्त्राण्यपि प्राचीनानि सन्ति । पवित्रपुरुषोत्तमक्षेत्रे विराजमान: श्रीजगन्नाथ: यद्यपि सकलजगतां नाथ: तथापि स विशेषत: उत्कलप्रदेशस्य सर्वनियन्तृरूपेण बहूनां राज्ञामाराध्य: आसीत् । विशेषत: गजपतिराजानां कृते प्रभुजगन्नाथ: अतितरामाराध्य: बभूव । गजपतिराजवंशस्य प्रतिष्ठा कपिलेन्द्रदेवेन उत्कलप्रदेशे पञ्चदशशतके एव कृता । स जगन्नाथस्य परम: श्रेष्ठ: भक्त: आसीत् । तथैव तस्य पुत्र: पुरुषोत्तमदेव: । गजपतिपुरुषोत्तमदेव: संस्कृतभाषायां सुमहान् विद्वान् आसीत् । गजपतिपुरुषोत्तमदेवविरचितेषु मुक्तिचिन्तामणिरन्यतम: ।

'भारतस्य प्रतिष्टे द्वे संसकृतं संस्कृतिस्तथा' इत्युक्त्यनुसारं ज्ञायते यद् भारतीया संस्कृतिरतीव प्राचीना महनीया च । जगन्नाथसंस्कृतिरपि भारतीयप्राचीनसंस्कृतेरङ्गभूता । श्रीजगन्नाथसंस्कृति: वैदिककालादारभ्यैवोज्जीवितास्ति । यस्या: संस्कृतेर्मूलाधारो भवति भगवान्श्रीजगन्नाथ: ।श्रीपुरुषोत्तमधामनि दारुव्याजशरीरेणैव पूर्णानन्दमयब्रह्मण: भगवत: श्रीजगन्नाथस्यावस्थिति: । भगवद्दर्शनप्रस्तावे यथा पद्मपुराणे[1] -

समुद्रस्योत्तरे तीरे आस्ते श्रीपुरुषोत्तमे ।
पूर्णानन्दमयं ब्रह्म दारुव्याजशरीरभृत् ।।

एतन्नाम्नाऽपि उत्कलप्रदेशस्य प्रचार: प्रसारश्च समग्रेऽस्मिन् आर्यावर्ते तस्माद्बहिरपि बहुशो दृश्यते । यथा शक्तिसङ्गमन्तन्त्रे[2] - 'जगन्नाथप्रान्तदेशश्चोत्कल: परिकीर्त्तित:' इति । समग्रस्य विश्वस्य जगत: नाथ: प्रभु: यस्मात् स जगन्नाथ इति नाम्ना व्यवदिश्यते । एतस्मादेव कारणान् न केवलं भारतवर्षेऽपि तु समग्रेऽस्मिन् विश्वे पवित्रतमोत्कलप्रान्तस्य महत्त्वमस्ति । यथा कपिलसंहितायाम्[3] -

'वर्षाणां भारत: श्रेष्ठो देशनामुत्कल: स्मृत: ।
उत्कलस्य समो देशो देशो नास्ति महीतले ।। '

अस्मिन्नेवोत्कलप्रान्ते पवित्रतमपुरुषोत्तमक्षेत्रस्यावस्थितिः । पुरुषोत्तमक्षेत्रमिदं सर्वापेक्षया प्रधानं सर्वोत्तमञ्च । एतादृशं पुण्यक्षेत्रं सर्वथा विरलमेव । यथा पुराणेषु -

वाराणस्याः सममस्ति क्षेत्रमेकाम्रकाननम् ।
पुरुषाख्यसमं क्षेत्रं नास्ति त्रैलोक्यमण्डले ।।

अत्रैव दारुविग्रहरूपेण भगवतः पुरुषोत्तमस्य श्रीजगन्नाथस्यावस्थितिः । यथा ब्रह्मयामले -

राजन्नवेहि रूपं मे नामजातिविवर्जितम् ।
केवलानुभवानन्दं प्रन्तदन्दि मनीषिणः ।।
स आस्ते श्रीनीलगिरौ जगन्नाथाख्यसंज्ञया ।।

वायुपुराणेऽपि[४] -

भारते चोत्कले देशे क्षेत्रे श्रीपुरुषोत्तमे ।
नीलाख्यो माधवो यो हि आस्ते दारवदेहभृत् ।।

पवित्रतमे उत्कले देशे द्वयोर्मन्दिरयोः ख्यातिर्दृश्यते । प्रथमं श्रीक्षेत्रस्थं भगवतः श्रीजगन्नाथस्य श्रीमन्दिरम्, द्वितीयन्तु एकाम्रक्षेत्रस्थं भगवतः श्रीलिङ्गराजस्य मन्दिरम् । समग्रेऽस्मिन् विश्वे यद्यपि द्वयोर्ख्यातिरविस्मरणीया तथापि पुरुषोत्तमक्षेत्रस्य श्रीजगन्नाथमन्दिरं तत्रान्यतमं स्थानं भजते । श्रीजगन्नाथस्य प्राचीनं नाम श्रीपुरुषोत्तमः । ऐतिहासिकानुसन्धानाद् विज्ञायते यत् श्रीजगन्नाथमन्दिरस्य निर्माता गङ्गवंशीयमहाराजा अनन्तवर्मचोडगङ्गदेवः । अस्य पुरुषोत्तमधाम्नः प्रसिद्धिः ख्रीष्टीयाष्टम-नवमशतकयोरासीदिति मुरारेरनर्घराघवनाटकात् ज्ञायते । यतो हि समुद्रतीरे[५] श्रीपुरुषोत्तमदेवस्य प्रतिष्ठाऽभूदिति तेन तत्र प्रतिपादित् । श्रीकृष्णमिश्रकृतप्रबोधचन्द्रोदयनाटकेऽपि श्रीपुरुषोत्तम[६]क्षेत्रविषये चर्च्चा दृश्यते । तस्य नाटकस्य समयस्तु १०७८ ख्रीष्टाब्दः । गङ्गवंशीयराजानन्तवर्मचोडगङ्गदेवः सोमवंशीयराजाकर्णकेशरीं पराजित्य ख्रीष्टीयद्वादशशतकस्य प्रथमभागे कलिङ्गोत्कलयोरेकीकरणं कृत्वा तत्र शासनकार्यं प्रचालितम् । तदानीन्तनसमये तस्य निर्देशेन पुर्यां श्रीजगन्नाथमन्दिरं निर्मितमभूदिति तत्परवर्तिगङ्गवंशीयराज्ञामभिलेखेषु प्राप्यते । यथा -

पादौ यस्य धरान्तरीक्षमखिलं नाभिश्च सर्वा दिशः
श्रोत्रे नेत्रयुगं रवीन्दुयुगलं मूर्धापि च द्यौरसौ ।
प्रासादं पुरुषोत्तमस्य नृपतेः को नाम कर्त्तुं क्षमः
तस्येत्याद्यनृपैरुपेक्षितमयं चक्रेथ गङ्गेश्वरः ।।[७]

किम्बदन्त्या स्पष्टं भवति यदतिप्राचीनकाले तत्र शबराः भगवन्तं श्रीजगन्नाथं नीलमाधवरूपेण पूजयन्ति स्म । परन्तु परवर्तिकाले यदा ब्राह्मण्यधर्मस्याभ्युत्थानमभुत्तदा दारुविग्रहरूपेण भगवतः श्रीजगन्नाथस्य पूजा प्रवर्तिता, ततः प्रभृतिः श्रीक्षेत्रं श्रीजगन्नाथधाम इति नाम्नाऽपि प्रथितमभूत् । क्षेत्रमिदं शङ्खक्षेत्रनाम्नाऽपि





प्रसिद्धम् । यतो हि शङ्खा कृतिरूपेणास्य क्षेत्रस्यावस्थितिः वर्त्तते । अपरञ्च भगवतः प्रमुखायुधरूपेण शङ्खस्य प्राधान्यात् तन्नामानुसारं क्षत्रस्यापि नाम शङ्खक्षेत्रमभूत् । यद्भवतु नाम सर्वेष्वागमेषु तन्त्रेषु पुराणेषु अन्येषु शास्त्रेषु चास्य क्षेत्रस्य प्रसिद्धिः भगवतः श्रीजगन्नाथस्य महत्त्ववर्णनमवश्यमेव प्राप्यते । एवमेव प्रकारेण एकाधिकचतुर्दशशतशकाब्देषु १४७९ तमख्रीष्टाब्देषु गृहीतोत्कलदेशराज्यभारेण विहितकाञ्चीविजयेन श्रीमज्जगन्नाथैकशरणेन श्रीपुरुषोत्तम भिधेन गजपतिना अष्टादशपुराणादिबहुतरग्रन्थेभ्यः प्रमाणवचनान्याकलय्य व्यरचि ग्रन्थो मुक्तिचिन्तामणिर्नाम । 'मुच्' धातोर्भावे 'क्तिन्' प्रत्यये कृते मुक्तिरिति सिद्ध्यति । मोचने, संसारबन्धनराहित्ये, ब्रहमस्वरूपावाप्तौ च मुक्तिशब्दः प्रयुज्यते । मुक्तिर्नाम मोक्षः । 'मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम्, मोक्षोऽपवर्गः' इति अमरसिंहः[८] । मोक्ष्यते दुःखमनेन इति मोक्षः । यथा सांख्यसारे[९]-

न मोक्षो नभसः पृष्ठे न पाताले न भूतले ।
सर्वशासंक्षये चेतः क्षेयो मोक्ष इति श्रुतेः ।।

आत्यन्तिकदुःखनिवृत्तिरिति नैयायिकाः । नित्यसुखावाप्तिरिति वेदान्तिनः । शरीरेन्द्रियाभ्याम् आत्मनो मुक्तत्वं मुक्तिरिति भरतः । मोक्षः, कैवल्यम्, निर्वाणम्, श्रेयः, निःश्रेयसम्, अमृतम्, अपवर्गः, अपुनर्भवः, स्थिरः, अक्षरञ्चेति मुक्तेः पर्यायाः । मुक्तिविषये यथा ब्रह्मवैवर्त्तपुराणे[१०] -

मुक्तिस्तु त्रिविधा साध्विः श्रुत्युक्ता सर्वसम्मता ।
निर्वाणपददात्री च हरिभक्तिप्रदा नृणाम् ।।
हरिभक्तिस्वरूपां च मुक्तिं वाञ्छन्ति वैष्णवाः ।
अन्ये निर्वाणरूपाञ्च मुक्तिमिच्छन्ति साधवः ।।

मुक्तये चिन्तामणिः मुक्तिचिन्तामणिरिति चतुर्थीतत्पुरुषसमासाश्रयेण सर्वकामप्रदे परमेश्वरे च चिन्तामणिशब्दप्रयोगः । यथा -

आयुरारोग्यमर्थञ्च भागांश्चैवानुषङ्गिकान् ।
ददाति ध्यायतां नित्यं सर्वकामप्रदो हरिः ।।

इत्युक्तेस्तस्य तथात्त्वम् । चिन्तया ध्यानधारणादिना मन्यते आहूयते इति चिन्तामणिः । 'चिन्तामणिः पद्मपाणिः' रित्यादिद्वाविंशतिबुद्धविशेषस्येति त्रिकाण्डशेषे[११] । श्रीपुरुषोत्तमक्षेत्रमाहात्म्यविषये प्रामाणिको भवति श्रीपुरुषोत्तमदेवसंगृहीतमुक्तिचिन्तामण्यभिधो ग्रन्थः । श्रीमज्जगन्नाथदेवस्यावलोकनेन तदन्ननिर्माल्याशनेन च कीदृक् फललाभो भवतीति प्रायशो बहवो न जानन्ति । अतः साधारणेभ्यो निर्वाचितविषयं विज्ञापयितुम् अत्र प्रयाशः ।

यावन्ति तीर्थानि भरतखण्डान्तःपातिनि, श्रीपुरुषोत्तमक्षेत्रं हि सकलहिन्दुसाम्प्रदायिकानां तीर्थस्थानम् । तीर्थानुसरणस्य तन्मध्ये तत्क्षेत्रं सर्वोत्तमम् । सर्वापेक्ष्या प्रतिवत्सरं समधिकलोकानां समागमोऽत्र दृश्यते ।

पुरुषार्थसाधनता सर्वथा अस्त्येव । यथा महाभारते[१२] -

तीर्थाभिगमनं पुण्यं यज्ञैरपि विशिष्यते ।
अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च ।।
अदत्त्वा काञ्चनं गाश्च दरिद्रो नाम जायते ।
अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणै: ।।
न तत्फलमवाप्नोति तीर्थाभिगमनेन यत् ।।

अग्निष्टोमादिभिरित्यनेन केषांचित्तीर्थानां यज्ञादधिकफलत्वं दर्शितमिति सामान्यतो यज्ञफलतुल्यफलतोक्ता न विरुध्यते । यथा -

यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते ।।

परपीडाचौर्यादिनिवृत्त्या हस्तयो: संयम:, अगम्यदेशगमनपरताडनादिनिवृत्त्या पादयो: संयम:, कुत्सितसङ्कल्पादिनिवृत्त्या मनस: संयम:, विद्याऽत्र तत्तीर्थगुणगानम् । तप:, तीर्थोपवासादि । कीर्त्ति:, सच्चारित्रत्वेन प्रसिद्धि: । यद्यपि कीर्त्तिशून्यस्य तीर्थफलाभाव इत्यसमञ्जसं, न वा प्रसिद्धि: कर्त्तुं शक्या कीर्त्यर्थं धर्मानुष्ठानानौचित्यात् । तथापि कीर्त्तिपदमधार्मिकत्वव्यतिरेकपरम् ।

धनानपेक्षाणां तीर्थानां यागद्यपेक्षयाऽतिशय उक्त: । न च जपोपवासादेरपि धननिरपेक्षतया कथमन्यापेक्षयाऽतिशय: तीर्थानामेवेति वाच्यम् । उपवासस्य कायक्लेशसाध्यतया ततोऽपि तीर्थस्यातिशयात् । उपवासासहिष्णूनां तत्रासामर्थ्याच्च । किञ्च -

संवत्सरशतं साग्रं निराहारस्य यत्फलम् ।
प्रयागे माघमासेऽस्य त्र्यहस्नातस्य तत्फलम् ।।[१४]

अतो बहुवित्तव्ययायासनिरपेक्षतया तीर्थसेवा धर्मान्तरेभ्यो विशिष्यते । यथा भारतेऽपि[१५] -

अज्ञानेनापि यस्येह तीर्थयात्रादिकं भवेत् ।
सर्वकामसमृद्ध: स स्वर्गलोके महीयते ।।

एतद्बलात् फलकामनां विनापि काम्यफलनिर्वाहो गम्यते । कामनाकृतं त्वधिकफलं भवति अकामकृतात् कामकृते पुण्येऽपि आधिक्यस्मरणात् । अत: सर्वथा तीर्थानुसरणमेव श्रेयस्करम् । यथा वायुपुराणे[१६] -

तीर्थान्यनुसरन् धीर: श्रद्धधान: समाहित: ।
कृतपापो विशुद्ध्येत किं पुन: शुद्धकर्मकृत् ।।
तीर्यग्योनिं न गच्छेच्च कुदेशे च न जायते ।
स्वर्गीभवति वै विप्रो मोक्षोपायञ्च विन्दति ।। इति ।





एतस्माद्विज्ञायते यत् तीर्थानामस्त्येव पुरुषार्थनिमित्तता । पुरुषार्थेषु च धर्म: प्रथम: । 'प्राधान्यं च धर्ममूलत्वादितरेषाम् । न च वक्तव्यं धर्ममूलोऽर्थोऽर्थमूलो धर्म: । यतोऽर्थमन्तरेणापि जपस्तपस्तीथयात्रादिना धर्मनिष्पत्ति:, अर्थलेशोऽपि न धर्ममन्तरेणेति । एवं काममोक्षवपीति' आह विज्ञानयोगी[१७] ।

केवलमष्टादशपुराणान्तर्गत-कतिविधपुराणेषु वेदतन्त्रा-गमादिषु चैतत्क्षेत्रविषयकं यत्किञ्चिदपि प्रमाणं विद्यते तत्सर्वमेकीकृत्यैव लोकलोचनमानेतुं ग्रन्थप्रणेतुरयं महान् प्रयास: मुक्तिचिन्तामणौ । एतदेव तीर्थस्यास्य प्राचीनत्वपरिचायकम् । यद्धवतु मुक्तिचिन्तामणि: एक: सुप्रसिद्ध: श्रीजगन्नाथ-तत्त्वसम्बलितो ग्रन्थ इत्यत्र नास्ति सन्देहलेश: । ग्रन्थेऽस्मिन् जगन्नाथस्थिति-पुरुषोत्तमक्षेत्रमाहात्म्य-भगवद्दर्शनफल-स्नानदर्शनफल-मञ्चस्थदर्शनफल-दक्षिणामुखदर्शनफल-स्नानावशेषजलधारणफल-श्रीगुण्डिचायात्राफल-शयनोत्थापनफल-उत्तरायणदक्षिणायनफल-जगन्नाथनिर्माल्यभक्षणफलादिविषयेषु सम्यक् विचारो दृश्यते ।

वस्तुत: श्रीपुरुषोत्तमक्षेत्रं श्रीपुरुषोत्तमश्च सर्वेषां जनानां मोक्षदत्वेन वर्त्तते । क्षेत्रदर्शननिर्माल्यभक्षणान्यन्तरङ्गभावेन मोक्षसाधनानि, तत्र तावत्तन्मोक्षस्य परम्परा साधनीभूतं क्षेत्रमिदम् । यथा तत्रैव -

विनाप्यष्टाङ्गयोगेन विनाप्यध्ययनानि च ।
मुक्तिचिन्तामणिस्त्वेष मोक्षद: सर्वदेहिनाम् ।।

युगेऽस्मिन् सर्वे कालकवलिता: । समयानुसारं सर्वेषां स्थिति: विलयश्च जायत एव । परन्तु अस्य क्षेत्रस्य माहात्म्यवर्णनावसरे स्वस्थितिप्रतिपादनावसरे च भगवता स्वयमेव प्रतिपादितं यत् -

उत्तम: पुरुषो यस्मात्तस्मात्स: पुरुषोत्तम: ।
दक्षिणस्योदधेस्तीरे न्यग्रोधो यत्र तिष्ठति ।।
विनाशं नैवमभ्येति तत्राहं स्वयमास्थित: ।
आदिकल्पे समुत्पन्ने महदुल्कानिवर्हणे ।।
अस्मिन् क्षेत्रे महाविष्णुर्न त्यजेत् क्वापि न व्रजेत् ।
तस्मात्सर्वप्रयत्नेन देहमात्रं परित्यजेत् ।।

इदं पुरुषोत्तमक्षेत्रं भूस्वर्गमिति कथ्यते सर्वापेक्षया गोपितं स्थानमिति प्रसिद्धि: वर्त्तते ।

भूस्वर्गमिति यं प्राहुर्मुनय: शास्त्रकोविदा: ।
पृथिव्यां गोपितं स्थानं नास्त्यन्यज्जगदीशितु: ।।

सर्वतीर्थेषु इदं पुरुषोत्तमक्षेत्रं प्रधानम् । अस्य क्षेत्रस्य सृष्टिर्नास्ति विलयोऽपि नास्ति । एतदर्थं क्षराक्षरमतिक्रम्यात्र श्रीपुरुषोत्तमस्यावस्थितिरिति तत्रैवोक्तम् -

सागरस्योत्तरतीरे महानद्यास्तु दक्षिणे ।
स प्रदेशो पृथिव्यां हि सर्वतीर्थवरप्रद: ।।

क्षराक्षरमतिक्रम्य वर्त्तेऽहं पुरुषोत्तमे ।
सृष्ट्या लयेन नाक्रान्तं क्षेत्रं मे पुरुषोत्तमम् ।।

अत्र मार्कण्डेयपुष्करिणी, श्वेतगङ्गा, रोहिणीकुण्डं, महोदधिः, इन्द्रद्युम्नसरश्चास्ति, यत्र स्नात्वा मुक्तिर्लभ्यते, पुनश्चात्र जन्म नैव भवति । यथा -

मार्कण्डेयावटेऽकृष्णे रोहिण्याञ्च महोदधौ ।
इन्द्रद्युम्नसरः स्नात्वा पुनर्जन्म न लभ्यते ।।

विभिन्नासु अवस्थासु भगवतः श्रीजगन्नाथस्य दर्शनमतीव महत्त्वपूर्णम् । रथारूढं जगन्नाथं दृष्ट्वा पुनर्जन्म न लभ्यते इत्युक्तिरतीव प्रसिद्धा एव । यथा ब्रह्माण्डपुराणे -

दोलारूढं जगन्नाथं मञ्चस्थं च जनार्दनम् ।
रथस्थं वामनं दृष्ट्वा पुनर्जन्म न विद्यते ।।

अन्यक्षेत्रापेक्षया एतत् क्षेत्रस्यापरमपि महत्त्वमस्ति यदत्र यदा कदापि भगवन्तं द्रष्टुं शक्यते । एतदर्थं न कोऽपि कालनियम अत्रास्ति । यथा -

पश्यतां मुक्तिदः साक्षात् सर्वधर्मवहिष्कृताम् ।
न कालनियमस्तत्र दर्शने तत्र भो द्विजाः ।।

महाप्रसादस्य माहात्म्यं सर्वोत्कृष्टम् । यस्य सेवनं भाग्यादेव सम्भवति । शुष्कं पर्युषितं वा भवतु तत्सेवनेन सर्वथा पापं नश्यतीत्यत्र नास्ति सन्देहलेशः । यथा -

कुक्कुरस्य मुखभ्रष्टं ममात्रं यदि जायते ।
ब्रह्माद्यैरपि तद्भक्ष्यं भाग्यतो यदि लभ्यते ।।
शुष्कं पर्युषितं वापि नीतम्वा दूरदेशतः ।
दुर्जनेनापि संस्पृष्टं सर्वथैवाघनाशनम् ।।

पुरीस्थश्रीजगन्नाथदेवस्य श्रीमन्दिरे यद्यपि बहूनां व्रतोत्सवानां परिपालनं भवति तथापि तत्र प्रामुख्येन द्वादशयात्रोत्सवानां[१८] महत्त्वं दृश्यते । ते च यथा -

मञ्चस्नानं रथवरगतिः शायनं चायने द्वे
पार्श्ववृत्तिः शयपरिहृतिः प्रावृत्तिः पुष्पपूजा ।
दोलाकेलिर्दमनकमहोऽक्षयपुण्यतृतीया
यात्राः स्कान्दे हरिप्रतिमयोर्द्वादशेति प्रणीताः ।।

आसु द्वादशयात्रासु रथयात्रा श्रेष्ठतमा -

रथस्थं वामनं दृष्ट्वा पुनर्जन्म न विद्यते ।
महावेदीं व्रजन्तं तं रथस्थं पुरुषोत्तमम् ।।





बलभद्रं सुभद्रां च जन्मकोटिशतोद्भवम् ।
रथच्छायां समाक्रम्य ब्रह्महत्यां व्यपोहति ।।

इत्यादीनि वचनानि रथयात्रायाः माहात्म्यवर्णनेन भगवतः श्रीजगन्नाथस्यापि महत्त्वं दृढीकुर्वन्ति । महाराजानङ्गभीमपुत्रस्य प्रथमनरसिंह-देवस्य राजत्वकाले अर्थात् ख्रीष्टीयद्वादशशतकस्य द्वितीयार्द्धभागे यदा अर्कक्षेत्रकोणार्कस्य सूर्यमन्दिरं प्रतिष्ठाप्य तस्याकारः भगवतः सूर्यस्य रथाकृत्या निर्मितोऽभूतदा प्रभृतिः श्रीजगन्नाथदेवस्य श्रीगुण्डिचारथयात्रायाः काचित् नूतनपरम्परा प्रारब्धेति सम्भाव्यते । अनुमीयते च यत् तस्माद्दिनादारभ्य त्रिमूर्त्तीनां दारुविग्रहस्य पूजापरम्परा रथोत्सवश्च प्रारब्धः । एतस्मात् विज्ञायते यत् राजाप्रथमनरसिंहदेव एव रथयात्रोत्सवस्य मूलभूत इति । श्रीमन्दिरस्यायं रथोत्सवः यद्यपि द्वादशयात्रोत्सवेषु सुप्रसिद्धस्तथापि उत्कलस्य सर्वप्रथमधर्मशास्त्रनिबन्धकारेण एकादशशतकीयेन श्रीमता शतानन्दाचार्येण (१०९९-११०० ख्री.) स्वग्रन्थे शतानन्दसंग्रहे श्रीगुण्डिचारथयात्रायाः विचारो नैव विहितः, परन्तु श्रीकृष्णजन्माष्टमी-बलभद्रजन्म-कुमार-पूर्णिमादीनामुत्कलप्रचलितव्रतोत्सवानां निर्णयः कृतः । तत्परवर्त्तिधर्मशास्त्रनिबन्धृणा शम्भुकरवाजपेयिना (१२८०-१३०० ख्री.) शम्भुकरपद्धतौ, तत्पुत्रेण विद्याकरवाजपेयिना (१३३०-१३५० ख्री.) अपि विद्याकरपद्धतौ रथयात्रायारुल्लेखो नैव विहितः। एतस्मात् स्पष्टं भवति यत् ख्रीष्टीयत्रयोदशशतकात्पूर्वं कस्मिंचिदपि धर्मनिबन्धग्रन्थेषु आषाढशुक्लद्वितीयायां तिथौ भगवतः श्रीजगन्नाथस्य रथोत्सवानुष्ठानविषये दारुविग्रहस्य विषयेऽपि च केनापि चर्चा नैव विहिता । परन्तु अनन्तरं पञ्चदशशतकीयेन कृत्यकौमुदीकारेण[१९] बृहस्पतिना, सप्तदशशतकीयेन स्मृतिसंग्रहकारेण[२०] विश्वनाथेन, अष्टादशशतकीयेन कालसारकारेण[२१] गदाधरराजगुरुणा च स्वस्वनिबन्धग्रन्थेषु श्रीगुण्डिचायात्रायारुल्लेखः कृतः ।

मुक्तिचिन्तामणौ न केवलं पुरुषोत्तममाहात्म्यविषये नापि केवलमात्रं तद्धामविषये चर्चा दृश्यते, अपि तु श्रीजगन्नाथसंस्कृतेः परमपरिचायकग्रन्थरूपेण मुक्तचिन्तामणेः सुमहद्योगदानमस्तीति ज्ञायते । अतः श्रीजगन्नाथसंस्कृतेः संरक्षणाय प्रचाराय प्रसाराय च मुक्तिचिन्तामणेः सुमहद्योगदानमस्तीति विशदं प्रमाणीक्रियत इति दिक् ।

**सन्दर्भग्रन्थाः -**

१. मुक्तिचिन्तामणौ
२. ध.श.को., पृ. १०८
३. क.सं. १/८
४. वा.पु. (उत्तर),

५. 'भो भो लवणोदवेलावनालीतमालतरुकन्दलस्य त्रिभुवनमौलिमण्डनमहानीलमणे: कमलाकुचकलशकेलिकस्तूरिकापत्राङ्कुरस्य भगवत: श्रीपुरुषोत्तमस्य यात्रायामुपस्थापनीया: सभासद:'। (अ.रा.प्रथम. पृ. ४)

६. पुरुष: - 'अहमुत्कलदेशादागतोऽस्मि । अस्ति तत्र सागरतीरसन्निवेशे पुरुषोत्तमशब्दितं देवतायतनम्' ।

(प्र.च. द्वितीय. पृ. ८७)

७. श्री.श्री. पृ. १६

८. अ.को. १/५/६

९. सां.सा. २/७/२५

१०. ब्र.वै.पु. प्रकृति २९

११. त्रि.शे. १/१६, पृ. ५

१२. वी.मि. तीर्थप्र., पृ. १२

१३. वी.मि. तीर्थप्र., पृ. १३

१४. वी.मि. तीर्थप्र., पृ. १६

१५. वी.मि. तीर्थप्र., पृ. १५

१६. वी.मि. तीर्थप्र., पृ. १४

१७. या.स्मृ. १/१, मिता. पृ. २

१८. मु.चि/ पृ. १८

निर्देशक:
केन्द्रीयसंस्कृतविश्वविद्यालय:
श्रीसदाशिवपरिसर:, पुरी







# अजगरप्रेम

प्रो. ललितकुमारसाहु:

एकदा काचिदामेरिकीय-पशुप्रेममहिला एकं शिशुमजगरं पालयितुं निस्पत्तिं नीतवती । स्थानीय-कर्तृपक्षद्वारा स्थिरीकृतनियमानुसारं सर्वासामौपचारिकतानामनन्तरम् अजगरशिशुं गृहमानीतवती । पशुर्भवतूत मानव:, शिशुषु एकमद्भुतमाकर्षणं तिष्ठति । तेषां शिशुसुल्लभकार्यकलापमवलोक्य साधारणजनोऽपि विमोहितो भवति । महिला तु प्रकृत्या पशुप्रेमशीला आसीत् । अत: सा शिशोरजगरस्य दिनचर्यां दृष्ट्वा भावविह्वलिता आसीत् । तस्या दिवसस्याधिकांशसमय: तेनाजगरशिशुना सह व्यतित: । अजगरोऽपि महिलायामत्यधिकं स्निह्यति स्म, अतस्तां विहाय दूरमपि नैव गच्छति स्म । सा महिला वदति, नि:सर्त-स्वार्थविहीनस्नेहं मानव:केवलं पशुश्य एव प्राप्नुयात् । अजगरस्याभिवृद्ध्या सह महिलाया: स्नेहोऽपि वर्धते स्म ।

अजगर: क्रमश: वर्धते स्म । महिला तमजगरं पूर्वमिव धृत्वा स्थानान्तरं नैव नयति स्म । हस्ताभ्यामुत्थाप्यादौ स्कन्धयो: स्थापितवती, तत: यत्र कुत्रापि गतवती । कदाचित् तं धारयित्वा अवसन्ना अभूत् । किन्तु अजगरस्य स्नेहेन इत्थमावद्धा यत् तं परित्यज्य कुत्रापि नैव गच्छति स्म । अपि च तं विना सा स्वभविँस्यज्जीवनस्य कल्पनामपि नैव कृतवती । कीयद्दिनानन्तरं तया महिलया लक्षितं यत्, अजगर: पूर्वमिव नैव खादति । अस्वस्थ इति मत्वा चिकित्सकसमीपं नीत्वा प्रादर्शयत् । चिकित्सक: सर्वविधनिरीक्षणानन्तरं सर्वं समीचीनमिति कथितवान् । स्वल्पखाद्यग्रहणस्य कारणं नैवावगम्यते स्म । तर्हि कियद्दिनानामपेक्षा करणीया । यद्वारा अपरे संकेता: प्राप्ता: स्यु: । दिनद्वयानन्तरं पुन: सा महिला अजगरं नीत्वा चिकित्सालयं गतवती । अस्मिन् समयेऽपि पूर्ववत्परीक्षानन्तरं परीक्षापरिणाम: समान: परिलक्षित: । अत्र अजगरस्य खाद्यपरिमाणे ह्रास: परिलक्ष्यते स्म । ड्राक्तरेण पृष्टं कियद्दिवसेषु तस्याजगरस्य नूतना गतिविधयो दृष्टा न वा ? महिला उक्तवती, आम्, तस्य पूर्वापेक्षया मयि समधिकस्नेह: लक्ष्यते स्म । मध्ये मध्ये आगत्य आदेहमस्तकं वेष्टयति स्म । चिकित्सक: विस्मित: सन् तां महिलामवलोकितवान् । ड्राक्तरमहोदयेनोक्तं तर्हि कथं एतादृशी महती कथा भवत्या एतावत्पर्यन्तं मां नैवोक्ता ? चिकित्सक उक्तवान् 'भवती चिन्तयति यत् सोऽजगर: स्नेहेन भवतीं वेष्टयति, परन्तु वास्तवपक्षे स भवत्यां नैव स्निह्यति । सोऽजगर: भवत्या: शरीरं वेष्टयित्वा भवत्या: शरीरस्य परिमापनं नयति । तथोपवासे स्थित्वा भवतीं सहजेन निगरितुं योजनां करोति । इदानीमपि विलम्ब: न जात: । तं नीत्वा अरण्ये त्यजतु' । महिला चिकित्सकस्य कथायां नैव विश्वसिति स्म । सा यं स्वार्थविहीनस्नेहं चिन्तितवती, तस्य पश्चादियान् सुमाहन् स्वार्थ:, सडयन्त्र: वा तिष्ठतीति नैव स्वीकृतवती ।

तत: किं जातं तद्विषये चिन्तनं कार्यम् । किन्तु घटनाया: वलिष्ठ: सम्पर्क: विद्यते अस्माकं सांप्रतिक-दैनिकजीवनेन सह । वयं सर्वे तथैव एकैकं शिशुमजगरं पालयाम:, य अद्य अस्मान् निगरितुं गच्छति । वयन्तु चिन्तयाम: स अस्मासु बहु स्निह्यतीति । तं सदैव वयं हस्ते धृत्वा भ्रमाम: । शारीरिकभावेन यद्यपि हस्ते तिष्ठति तथापि वयं यत्र कुत्रापि गच्छाम:, स: तत्र अस्माकं मस्तके उषित्वा सर्वत्र गच्छति । महिलाया इव समधिकसमय: तेन साकं यापनेन मस्तिस्कं अतिशयं भारयुक्तं लगति, व्यथते, वयञ्चापि व्यतिव्यस्ता भवाम: । तथापि वयं तस्य स्नेहस्य बन्धनेनेत्थमाबद्धा यत् तं

विना अस्माकं जीवितस्य परिकल्पनामपि नैव कुर्मः । स भवति अस्माकं हस्ते, कोषे (इदम्बू)स्यूते वा स्थितः दूरभाषः
(शदंग इम्दहा) । कदाचिन्मनसि प्रश्नः समुदेति यत् वयं दूरभाषं व्यवहराम उत स अस्मान् व्यवहरति ?
समय आसीत् यदा वयं दूरभाषं व्यवहृत्य ज्ञातिभिः वार्त्तालापं कृतवन्तः । एकनिमेषवार्त्तालापाय यद्यपि
विशतिरूप्यकाणि प्रदत्तानि, तथापि प्रतिसप्ताहं मातापितृभ्यां सह वार्त्तालापः भवति स्म । अधुना कथायै पूर्ववत् मूल्यं न
दीयते तथापि अस्माकं पार्श्वे स एकैव निमेषो नास्ति स्वजनैः सह वार्त्तालापाय । पर्याप्तसमये विद्यमानेऽपि वयं व्यस्ता
अस्मत्पालित-शिशु-अजगरमोवाइलसह । मार्गे गमनवेलायां केनापि सह संघर्षः भवतिः पुनश्च मार्गस्थं प्रस्थरमदृष्ट्वा
पादस्खलनेन पीडामनुभवामः । कुत्रापि पुनः सोपानातिक्रमकाले समाप्तेऽपि सोपाने ज्ञानाभावात् नीच्चैः पतामः ।
यानचालनसमयेऽपि स्वगृहं विहाय अग्रे गच्छाम अस्यैवमोवाइलप्रभावेण । इत्थं बुहवारं सम्बादपत्रेभ्यः ज्ञातं यत् दूरभाषं
व्यवहृत्य मार्गे यानचालनसमये मार्गपार्श्वपरिवर्त्तनसमये च असावधानताकारणात्, दुर्घटना जायन्त इति, येन जीवनहानिः
भवति । तथापि वयं चिन्तयामः दूरभाषरूपि - अजगरशिशुः, य अस्मासु एतावत्परिमितं स्निह्यति, तं वयं कथम् अनाथं
कुर्याम ।

फेसवुक् - ह्वाट्सप्मध्ये केवलं नीतिवाणीविनिमयेन अस्माकमात्मसन्तोषापेक्षया कामपि वाणीं जीवने परिपाल्य समाजाय दृष्टान्ता भवामश्चेदधिकं समीचीनं भवेत् । निजसमयमाधिक्येन रचनात्मकार्ये व्यवहरामश्चेत् अजगरः तस्य स्नेहस्य मुखावरककृत्रिममुखं परिधाय अस्माकं शरीरस्य मापनं नैव नयेत् उतास्मान् निगरितुं योजनां न कुर्यादिति सर्वेषां मतिः भवेत् ।

प्रबन्धसम्बन्धितश्लोकाः -

१) कामात्मता न पशस्ता न चैवेहास्त्यकामता ।
काम्यो हि वेदाधिगमः कर्मयोगश्च वैदिकः ।। (मनु. २/२१)

२) इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम् ।
संनियम्य तु तान्येव ततः सिद्धिं नियच्छति ।। (मनु. २/९३)

३) न जातु कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ।। (मनु. २/९४)

४) आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः ।
आचाराद्धनमक्षयमाचारो हन्त्यलक्षणम् ।। (मनु. ४/१५६)

५) नाभिनन्देत मरणं नाभिवन्देत जीवनम् ।
कालमेव प्रतीक्षेत निर्देशं भृतको यथा ।। (मनु. ६/४५)

**धर्मशास्त्रविभागः,**
**श्रीसदाशिवपरिसरः, पुरी**







# श्रीमद्भागवतीय ज्योतिषस्तत्वानुशीलनम्

**डा. विश्वरञ्जनपतिः**

अस्माकं भारतीय परम्परायां धर्मप्रतिपाकानि चतुर्दशशास्त्राणि सन्ति। तेषु धर्मतत्वप्रतिपादकानां वेदानां तत् पोषकपरकाणां वेदाङ्गानां प्रमुखस्थानं भवति। वेदाङ्गेषु ज्योतिशास्त्रस्य स्थानमतीव महत्वपूर्णं वर्त्तते। शास्त्रमेतत् वेदपुरुषस्य चक्षुस्थानीयं वर्त्तते। यथा चक्षुषा हीनः जनः अन्धः काणो वा भवेत्, किमपि कर्मं कर्त्तुं न प्रभवति, तथैव ज्योतिःशास्त्रं विना वैदिकाः विद्वांसः किमपि वैदिकं श्रौतकर्म यज्ञानुष्ठानं कर्त्तुं असमर्थाः भविष्यन्ति। अतः शास्त्रस्यास्य महती भूमिका वर्त्तते यज्ञादिकर्म सम्पादने। तस्माद् ज्योतिशास्त्रस्य प्रशंसायां विपश्चितः तत्ववेत्तारः इत्थं कथयन्ति।

**पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम्।**
**तच्चक्षु ज्योतिषं शास्त्रं दिव्यं ज्ञानमतीन्द्रियम् ।**

यद्यपि धर्ममीमांशायां चतुर्दशशास्त्राणि सन्ति तेऽनि स्व स्व मतमवलम्ब्य नानाविधान् सिद्धान्तानां प्रतिपादयन्ति सर्वेऽपि सिद्धान्ताः सप्रत्यक्षरूपाः सन्ति तेषां यत् फलमिन्द्रियार्थगोचरं न भवति। परं ज्योतिषशास्त्रस्य सिद्धान्ताः इन्द्रियगोचराः सर्वजनप्रत्यक्षभूताः सन्ति। तस्मादस्य प्रामाणिकता वर्त्तते एव। तदुक्तमस्ति -

**सप्रत्यक्षाणिशास्त्राणि विवादस्तेषु केवलम् ।**
**सफलं ज्योतिषंशास्त्रं चन्द्रार्कौ यत्र साक्षिणौ ।।**

पुनश्च

**यथा शिखामयूराणां नागानां मणयो यथा ।**
**तद्वत्वेदाङ्ग शास्त्राणां ज्योतिषं मूर्ध्न्यवस्थितम् ।।**

एवं पुराणेषु शास्त्रस्यास्य महती प्रशंसा ज्योतिशास्त्रे तथा शास्त्रान्तरेष्वपि विलोकयते। अस्य प्रवृत्तौ तत्वविवेके इयं कथा उनलभ्यन्ते। अस्य शास्त्रस्यादिमकवक्ता ब्रह्मा आसीत्। स च कदाचित् नारदाय अस्योपदेशः कृतः। ततः चन्द्रमसे ततः परं शेनेकाय सोऽपि मण्डिव्याय उक्तवान्। सूर्यदेवः मयनामकाय दानवाय अस्योपदेशं दत्तवान्। तदनु अस्य शास्त्रस्य प्रचारप्रसारश्च संसारेऽस्मिन् जातः। तदुक्तमस्ति तत्वविवेके ब्रह्मा प्राह च नारदाय हिमगुर्यच्छैनकायामलं माण्डव्याय वशिष्ठ संज्ञक मुनिः सूर्यो मयायाह यत् -

प्रत्यक्षागमयुक्तिशालि तदिदं शास्त्रं विहायान्यथा यत् कुर्वन्ति नराश्चमास्तु सदसद्वेदोक्तिशून्या भृशाम् ।

अस्य शास्त्रस्य प्रवर्त्तका: नैके माचार्या: सन्ति, तेषु अष्टदशा: एव सन्ति प्रधाना: धुरिणाश्च। ते यथा

**ब्रह्मचार्यो वसिष्ठोऽत्रिर्मनु पौलस्त्यरोमशौ।**
**मरीचिरंगिरा व्यासो नारद: शौनको भृगु:।।**
**च्यवनो यवनो गर्ग: कश्यपश्च पराशर:।**
**अष्टादशैते गंभीरा ज्योति:शास्त्र प्रवर्त्तका: ।।**

एतेषु अष्टादशाचार्येषु सत्यवतीनन्दनस्य कृष्णद्वैपायनस्य व्यासदेवस्य गणनापि भवति। प्रायश: सर्वै आचार्यै व्यासस्य ज्योतिर्वित्सु श्रेष्ठत्वं गौरवत्वं च स्वीकृतम्। तस्मात् वेदपुराणेतिहास स्मृतिशास्त्र प्रवर्त्तकस्य व्यासदेवस्य कृतिस्तु अष्टादशपुराणेषु ज्योतिशास्त्रस्य महती चर्चा विलोक्यते। भगवता व्यासदेवेन अष्टादश पुराणानि विरचितानि। तेषां पुराणानां नामगणना पौराणिकै: क्रियते । यथा -

**ब्राह्मं पाद्मं बैष्णवं च शैवं भागवतं तथा**
**तथान्यं नारदीयं च मार्कण्डेयं च सप्तमम् ।**
**आग्नेयं अष्टमं चैव भविष्यं नवमं तथा ।**
**दशमं ब्रह्मवैवर्तं लैगंएकादशं स्मृतम् ।।**
**वाराहं द्वादशं चैव स्कान्दंचात्रत्रयोदशम् ।**
**चतुर्दशं वामनकं कौर्मं पञ्चदशं तथा ।।**
**मात्स्यं च गारुडं चैव ब्रह्माण्डञ्च तत: परम् ।**
**महापुराणन्येतानि ह्यष्टदश महामुने।।**

वि.पु ३-६-२१-२४

एतेषु अष्टादश पुराणेषु श्रीमद्भागवतमहापुराणस्य गणना पञ्चम स्थाने क्रियते । पुराणमेतत् सर्वविद्याया: आगार: इति स्वीकुर्वन्ति विद्वांस:। यतो हि एतत् गायत्र्या: समारम्भ: भवति। पुनश्च तेनैव मन्त्रेण परिसमाप्तिं गच्छन्ति। निगमकल्पतरो: सारभूतं पुराणमिदं वर्त्तते। यस्य पुराणस्य श्रवणेन मननेन निधिध्यासनेन च भक्त्या मानव: दु:खसागरात् दुस्तरात् अनायासेन गेवत्सपदवत् तरति तारयति च सर्वा: श्रोतृमण्डलि: । तदुक्तमस्ति -

**निगमकल्पतरोर्गलितं फलं शुक्रमुखादमृतद्रव संयुतम्**
**पिवत भागवत रसमालभंमुहुहो रसिका: भुविभावुका: ।**

आषोडशाद् ब्राह्मणस्य सावित्री नातिवर्तते । म.२/३८





तत्रैव

**श्रीमद्भागवतं पुराणममलं यद्वैष्णवानां प्रियम्।**
**यस्मिन् पारमहं मेकम अलं ज्ञानं परं गीयते ।।**
**यत्र ज्ञानविरामभक्तिसहितं नैष्कर्म्यमविष्कृतम्।**
**तत् श्रृण्वन् प्रपठन् विचारणो पर: भक्त्योविमुच्येनर: ।।**

अस्य पुराणस्य द्वादशस्कन्देषु पञ्चमे ज्योति: शास्त्रीय विषया: उपलभ्यन्ते। अस्मिन् ग्रहचन्द्रतारादीनां गति: भूगोलवर्णनं शिशुमारचक्रस्य अवस्थिति विषये विपुलाचर्चा अवलोक्यते। अस्य मतानुसारं समग्रां अवनीस्थिरा सूर्यचन्द्रतारकादयश्च तत्परित: यथाक्रमं भ्रमन्ति। पुराणेऽस्मिन् राजापरिक्षित भूमण्डलविषये शंकित: सन् शुक्रदेवगोस्वामिनं ज्योति:विषयान् प्रश्नान् पृच्छति। तद् यथा -

उक्तस्त्वया भूमण्डलायानंविशेषो यावददतित्य स्तपति यत्रचासौ ज्योतिषांगणै: चन्द्रमा सन् दृश्यते। तत्रापि प्रियव्रतरथचरण परिखातै: सप्तभि: सप्तसिन्धव: उपकुलुता:। यत: एकस्या: सप्तदीपविशेष विकल्पस्त्वया भगवन् खलु सूचित:। एतदेवखिलमहं मानतो लक्षणकश्च सर्वं विजिज्ञासामि । श्रीमद् भगवत् ५/१६/१/२

पुराणमिदं दृश्यमानं प्रपञ्चं ब्रह्मतत्वस्य स्थूलरूपमिति स्वीकृत्य मानव: विवुधायुषापि तस्य स्वरूपज्ञातुमसमर्थ: भवेदिति स्वीकरोति। भूव:, गोलाकारत्वंमत्रापि स्वीकृतमस्ति। पृथिव्यागोलाकारत्वं विषये इत्यमुदाहरणं ददति।

एतेन हि दिवोमण्डलमान् तद्विद: उपदिशन्ति यथा सूर्यस्यगति: द्विदलयो: निष्पावादीनां ते अन्तरेणान्तरीक्षं तदुभय सन्धितम्। श्रीमद् भागवत् ५-२१-२

ब्रह्माण्डमध्यगत: रवि: स्व तेजसा त्रिलोकीं प्रतप्रति

अयं सूर्य: उदगयनदक्षिणायन वैषुक्तसंज्ञाभि: मान्द्य शीघ्र सम गतिभि: आरोहणावरोहणसमानस्थानेषु गच्छन् मकरादिषु राशिषु अहोरात्राणि विदधाति। यदा सूर्य: मेषतुलयो: वर्त्तते तदा रात्रि दिवसे समे भवत:। यदा च सूर्य: बृषादि पञ्चराशिषु गच्छति तदा दिनानि वर्द्धन्ते यदा च बृश्चिकादिषु पञ्चसु गच्छति तदा रात्रि: वर्द्धन्ते एवं सर्वदा अयं सूर्य: एकेन चक्रयुक्तेन ज्योतिर्मयेन रथेन मेरो: चतुर्दिक्षु परिभ्रमति। मानसोत्तर गिरौ अयं नवकोटि एक पञ्चाशत् लक्ष योजनानि एकस्मिन् वर्षे गच्छति। श्रीमद् भागवत् ५-२१-३-६

सूर्यरथचक्रे द्वादशअरा: षड्नेमय: त्रिनाभय सन्ति। यथा क्रमं एते द्वादशमासान् षड्ऋतुं च ज्योतयन्ति। मेरुपर्वतं क्रोडी कृत्य अयं मानसोत्तरं तैल यन्त्रवत् परिभ्रमति। छन्दनामानां सप्त हया: अस्मिन् रथे योजिता: सन्ति। षष्ठि सहस्त्राणि बालखिल्या: ऋषय: सूर्यरथे वर्त्तमानां देवमदित्यं दत्तवन्ति। अयं सूर्य: द्वादशमासभि: द्वादशनामानि धारयन् गन्धर्वोप्सरोगणै: पूजित: भवति। क्षणेनैव कालेन सूर्य

आयुष्यं प्राङ्मुखो भुङ्क्ते ।। मनु. २/५२

लक्षोत्तरं सार्द्धनवकोटि योजनपरिमण्डलं भूवलयस्य द्विसहस्र योजनानि भूङ्क्ते श्रीमद् भागवत् ५-२१-१५-१९

नक्षत्राणि

नभमण्डले या: तारका: उपलभ्यन्ते तासु सप्तविंशति प्रसिद्धा: सन्ति। एतानि नक्षत्राणि पुराण दृष्ट्या चन्द्रमस: पत्न्य: इति ख्याता: सन्ति। पुराणमिदं अभिजिता: सह अष्टविंशति नक्षत्राणि इति स्वीकरोति।

श्रीमद्भागवत - ५-२२-११

यथा कुलालचक्रे स्थिता: पिपिलिका: आत्मन: भ्रमणगतिं नावगच्छति तथैव भूमौ वर्त्तमाना: वयं एतेषां गतिं न जानीम: चन्द्रमस: गति :-

यथा सूर्यस्य गति: पुराणेऽस्मिन् वर्णिता: अस्ति तथैव चन्द्रमस: अपि नाभौ मण्डले अवस्थिति वर्णयति। चन्द्रमा अर्क गमस्तिभ्य: उपरिष्ठात् लक्षयोजनत: उपलभ्यमान: सूर्यस्य वार्षिकी गतिं पक्षाभ्यां मारच मुक्तिं सार्द्धदिवसाभ्यां साधयति। अयं द्रुततर गमनशील ग्रहेति उच्यते। अयं चन्द्रमा आपुर्यमाणाभि: कलाभि: देवानां क्षीयमाणाभि: कलाभि: पितृपुरुषाणां अहोरात्रं सूचयति। त्रिंशत् मुहूर्तै: चन्द्र: एकं नक्षत्रं भूङ्क्ते। एवं आदित्यादि नवग्रहाणां राशिचक्रे स्थिति: वर्णिता: अस्ति। व्यासविरचितेषु पुराणेषु ज्योर्तिविज्ञानसम्बन्धिनां तत्वानां प्राय: प्रतिपुराणं वर्णनं विलोक्यते। तेषां सम्यग अध्ययनेन ज्योतिशास्त्र विषय परकाणि खगोल तत्वानि नव्यनूतने रूपेण आविर्भविच्यन्ति इति दिक् ।

ज्योतिषविभागाध्यक्ष:
श्रीसदाशिवपरिसर:, पुरी







# मनुस्मृतौ अन्त:करणालोचनम्

डॉ. प्रियरञ्जनरथ:

अन्त:करणस्यैवैकं रूपं भवति चित्तम् इत्यद्वैत वेदान्तिन: कथयन्ति । वस्तुत: वृत्तिभेदात् अन्त:करणस्य विभागो भवति । सा च वृत्ति: - यथा तडागोदकं छिद्रात् निर्गत्य कुल्यात्मना केदारान् प्रविश्य केदारवदेव चतुष्कोणाद्याकारं भवति, तथा तैजसमन्त:करणमपि चक्षुरादिद्वारा निर्गत्य घटादिविषयदेशं गत्वा घटादिविषयाकारेण परिणमते । स एव परिणाम: वृत्तिरिति कथ्यते । सा च वृत्ति: चतुर्विधा - संशय:, निश्चय:, गर्व:, स्मरणञ्चेति । एवं विधवृत्तिभेदेन एकमपिमन्त:करणं मन इति वुद्धिरिति अहंकारइति चित्तमिति च व्याख्यायते, तदुक्तं पतञ्जलिना योगसूत्रे -

[1]मनो वुद्धिरहंकारश्चित्तं करणमन्तरम् ।
संशयो निश्चयो गर्व: स्मरणं विषया इमे ।।

महत्त एवैकं रूपमिति सांख्ययोगविदु:यथा - योगश्चित्तवृत्ति निरोध:[2] । मन एव चित्तमिति नैयायिका: -

चित्तं विकल्पो विज्ञाप्तिर्मनो विज्ञानमेव च ।
आलयस्त्रिभवश्चेष्टा एते चित्तस्य पर्याया:[3] ।।

जगत: निर्माणार्थं महदादिक्रमेणैव सृष्टि: । ब्रह्मा आत्मन: परमात्मनश्च सकाशात्तेन रूपेण मन उद्धृतवान्, परमात्मन एव ब्रह्मस्वरूपेणोतपन्नत्वात् । परमात्मन एव च मन:सृष्टि: वेदान्तदर्शने, न प्रधानात् । तथा च श्रुति: -

एतस्माज्जायते प्राणो मन: सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी[4] ।।

मनश्च श्रुतिसिद्धत्वाद्युगपज्ज्ञानुत्पत्तिलिङ्गाच्च सत् अप्रत्यक्षत्वादसदि च । मनस: पूर्वमहंकारतत्त्वम् अहमित्यभिमानाख्यकार्ययुक्तम् ईश्वरं स्वकार्यकरणक्षमम् सृष्टवान् यथा -

उद्बर्हात्मनश्चैव मन: सदसदात्मकम् ।
मनसश्चाप्यहंकारमभिमन्तारमीश्वरम्[5] ।।

मनो महत् सृष्टिं करोति परमात्मन: स्रष्टुमिच्छया प्रेर्यमाणम् तस्मादाकाशमुत्पद्यते । तच्च पूर्वोक्तानुसारादहङ्कारतन्मात्रक्रमेण । आकाशस्य शब्दं गुणं विदुर्मन्वादय: तदुक्तं मनुना -

मन: सृष्टिं विकुरूते चोद्यमानं सिसृक्षया ।
आकाशं जायते तस्मात्तस्य शब्द गुणं विदु:[6] ।।

आकाशात्तु विकारजनकात्सुरम्यसुरभिगन्धवह: पवित्रो वलवांश्च वायुरूत्पद्यते[7] । वायोरपि तेज: उत्पद्यते[8] । तेजस आप उत्पद्यन्ते[9] । मनोवाग्देहहेतुकं कर्म विहितनिषिद्धरूपं सुखदु:खफलकं तज्जन्या

एव मनुष्यतिर्यगादिभावेनोत्कष्टमध्यमाधमापेक्षया मनुष्याणां गतयो जन्मान्तरप्राप्तयो भवन्ति । यथा शास्त्रे -

शुभाशुभफलं कर्म मनोवाग्देहसंभवम् ।

कर्मजा गतयो नृणामुत्तमाधममध्यमाः[१०] ।।

तस्य देहिसम्बन्धिनः कर्मण उत्कृष्टमध्यमाधम तथा त्रिप्रकारकस्यापि मनोवाक्कायाश्रितस्य वक्ष्यमाणदशलक्षणोपेतस्य मन एव प्रवर्त्तकं जानीयात् । मनसा हि संकल्पितमुच्यते क्रियते च । तथा तैत्तिरीयोपनिषदि उक्तं यत् - '[११]तस्माद्यत्पुरुषो मनसाभिगच्छति तद्वाचा वदति तत्कर्मणा करोति' इति । पुनश्च शास्त्रेऽभिहितं यत् -

तस्येह त्रिविधस्यापि त्र्यधिष्ठानस्य देहिनः ।

दशलक्षणयुक्तस्य मनो विद्यात्प्रवर्त्तकम्[१२] ।।

दशलक्षणानि कर्माणि कानि इति जिज्ञासायां कथं परधनमन्यायेन गृह्णामीत्येवं चिन्तनम्, मनसं ब्रह्मवधादि निषिद्धाकांक्षा, नास्ति परोलोकः देह एवात्मेत्येतद् ग्रहश्चेत्येवं त्रिप्रकारमशुभफलं मानसं कर्म । एतत्त्रयविपरीतबुद्धिश्च त्रिविधं शुभफलं मानसं कर्म । अप्रियाभिधानम्, असत्यभाषणं, परोक्षे परदूषणकथनं सत्यस्यापि राजदेशपौरवातदिर्निष्प्रयोजनं वर्णनम् । इत्येवं चतुः प्रकारमशुभफलं वाचिकं कर्म भवेत् । एतद्विपरीतं शुभफलम् । अन्यायेन परस्वग्रहणमशास्त्रीयहिंसा परदारागमनमित्येवं त्रिप्रकारमंशुभफलं शारीरं कर्म[१३] । पुनश्च मनसायत्सुकृतं दुष्कृतं वा कर्म कृतं तत्फलं सुखदुःखमिह जन्मनि जन्मान्तरे वा मनसेवायमुपभुङ्क्ते । एवं वाचा कृतं शुभाशुभं वाग्द्वारेण मधुरगद्गद्भाषित्वादिना, शारीरं शुभाशुभं शरीरद्वारेण स्रक्चन्दनादिपियोपभोगव्याधितत्वादिनाऽनुभवति तस्मात्प्रयत्नेन शारीरमानसवाचिकानि धर्मरहितानि च वर्जयेन्न कुर्यादित्यर्थः ।

पञ्चबुद्धीन्द्रियाणि पञ्चकर्मेन्द्रियाणि मनो एव मिलित्वा एकादशेन्द्रियाणि भवन्ति इति पूर्वं मनीषिणा आहुः तेष्वेकादशसु एकादशसंख्यापूरकं च मनोरूपमन्तरिन्द्रियं ज्ञातव्यम् । स्वगुणेन संकल्परूपेणोभयरूपेन्द्रियगणप्रवर्त्तकस्वरूपम् । अत एव यस्मिन्मनसि जिते उभावपि पञ्चकौ बुद्धीन्द्रियकर्मेन्द्रियगणौ जितौ भवतः । उक्तमस्ति यत् -

एकादशं मनो ज्ञेयं स्वगुणेनोभयात्मकम् ।

यस्मिञ्जिते जितावेतौ भवतः पञ्चकौ गणौ[१४] ।।

यस्मादिन्द्रियाणां विषयेषु प्रसक्त्या दृष्टादृष्टं च दोषं निःसंदेहं प्राप्नोति । तान्येव पुनरिन्द्रियाणि सम्यङ् नियम्य सिद्धिं मोक्षादिपुरुषार्थयोग्यतारूपां लभते । तस्मादिन्द्रियसंयमं कुर्यादिति शास्त्रेऽभिहितमस्ति

इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम् ।

संनियम्य तु तान्येव ततः सिद्धिं नियच्छति[१५] ।।

एतानीन्द्रियाणि विषयेषु प्रसक्तानि तथा नासेवया विषयसन्निधिवर्जनरूपया नियन्तुं न शक्यन्ते,





दुर्निवारत्वात् । यथा सर्वदा विषयाणां क्षयित्वादिदोषज्ञानेन शरीरस्य चास्थिस्थलमित्यादिवक्ष्माणदोषचिन्तनेन । तस्माद्विषयदोष ज्ञानादिना बहिरिन्द्रियाणि मनश्च नियच्छेत् । यस्मादनियमितं मनो विकारस्य हेतुः तस्मादाह - वेदाध्ययन- दान - यज्ञ - नियमतपांसिभोगादिविषयसेवासंकल्पशालिनो न कदाचित्फलं सिद्धये प्रभवति ।

सर्वेषामिन्द्रियाणां मध्ये यद्येकमपीन्द्रियं विषयप्रवणं भवति, ततोऽस्य विषयपरस्य इन्द्रियान्तरैरपिं तत्त्वज्ञानं क्षरति न व्यवतिष्ठते । चर्मनिर्मितोदकपात्रादिव । एतदर्थं बहिरिन्द्रियगणमायत्तं कृत्वा मनश्च संयम्य सर्वान् पुरुषार्थान्सम्यकसाधयेत् इति मनुनोक्तं[१६] ।

याज्ञवल्क्यस्मृतौ यतेरात्मोपासनाङ्गं नियम विशेषमाह चक्षुरादीन्द्रियसमूहं रूपादिविषयेभ्यः सम्यङ्निरुध्य विनिवर्त्य रागद्वेषौ प्रियाप्रियविषयौ प्रहाय त्यक्त्वा भूतानामपकारेण भयमकृर्वन् शुद्धान्तःकरणः सन्नद्वैतासाक्षात्कारेणामृतीभवति मुक्तो भवति यथा -

संनिरुद्ध्येन्द्रियग्रामं रागद्वेषौ प्रहाय च ।

भयं हित्वा च भूतानाममृतीभवति द्विजः[१७] ।।

विषयाभिलाषद्वेषजनितदोषकलुषितस्याशयस्यान्तःकरणस्य शुद्धिः कल्मषक्षयश्चप्राणायामैः कर्त्तव्यः । मोक्षस्य च शुद्धान्तःकरणतामन्तरेण दुर्लभत्वात् शुद्धिर्विशेषतोऽनुष्ठेया । यथा मनुनोक्तम् -

दह्यन्ते ध्यायमानानां धातूनां हि यथा मलाः ।

तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात्[१८] ।।

सर्वेषामेन्द्रियाणां द्वारं निरूध्य हृदि मनः संयम्य पुनश्च विजितमनसा प्राणान् मस्तके संस्थाप्य परमात्मासम्बन्धियोगधारणायां स्थितः भूत्वा यः पुरुषः ॐ एकाक्षरब्रह्म उचार्य निर्गुणब्रह्म विचिन्त्य शरीरं त्यजति स परमपदमाप्नोति । यथा भगवद्गीतायां -

सर्वद्वाराणि संयम्य मनो हृदि निरूध्य च ।

मूर्द्ध्याधायात्मानः प्राणामास्थितो योगधारणम् ।।

ॐ मित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।

यः प्रयाति त्यजन् देहं स याति परमां गतिम्[१९] ।।

पञ्चकर्मेन्द्रियाणि पञ्चज्ञानेन्द्रियाणि मनः वुद्धिश्च एतान् कामस्याधिष्ठानमिति उच्यते । कामः एतैः ज्ञानमावृत्य देहिनम् विमह्योति । तस्मातिन्द्रियाणि आदौ वशं कृत्वा ज्ञानविज्ञान्राशनं पाप्मानं कामं हन्यात् ।

यस्य वाङ्मनश्चोभयं शुद्धं भवति स वेदान्ते अवगतं सर्वं फलं सर्वज्ञानादिरूपं मोक्षलाभादवाप्नोति । यथा -

यस्य वाङ्मनसी शुद्धे सम्यग्गुप्ते च सर्वदा ।

स वै सर्वमवाप्नोति वेदान्तोपगतं फलम्[२०] ।।

सर्वं परप्रार्थनाऽऽदिसाध्यं दुःखहेतुः । सर्वमात्माधीनं सुखहेतुः सर्वदा यत्कर्म कुर्वतोऽस्यानुष्ठातुः

अन्तरात्मनस्तुष्टिः स्यात्तत्प्रयत्नतोऽनुष्ठेयम् । अतुष्टिकरं वर्जयेत् यथा -

यत्कर्म कुर्वतोऽस्य स्यात्परितोषोऽन्तरात्मनः ।
तत्प्रयत्नेन कुर्वीत विपरीतं तु वर्जयेत्[21] ।।

स्वेदाद्यपहतान्यङ्गानि जलेन क्षालितानि शुद्ध्यन्ति । मनश्च निषिधचिन्तादिना दूषितं सत्याभिधानेन शुद्ध्यति । भूतात्मा सुक्ष्मादि लिङ्गशरीरावच्छिन्नो जीवात्मा ब्रह्मविद्यया पापाक्षयहेतुतया तपसा च शुद्धो भवति । शुद्धः परमात्मारूपेणावतिष्ठते । वुद्धिश्च विपर्ययनज्ञानोपहता यथार्थ विषयज्ञानेन शुद्ध्यति । मनुनोक्तं यत् -

अद्भिर्गात्राणि शुद्ध्यन्ति मनः सत्येन शुद्ध्यति ।
विद्यातपोभ्यां भूतात्मा वुद्धिर्ज्ञानेन शुद्ध्यति[22] ।।

।। इति दिक् ।।

धर्मशास्त्रविभागः
राष्ट्रियसंस्कृतसंस्थानम् (मा.वि.)
श्रीसदाशिवपरिसरः, पुरी, उत्कलाः

सन्दर्भग्रन्थाः -

१. पा.यो.सू.
२. पा.यो.सू.
३. ल.सू. ९०/४४९
४. मु.उ. २/१/३
५. मनु. १/१४
६. मनु. १/७५
७. मनु. १/७६
८. मनु. १/७७
९. मनु. १/७८
१०. मनु. १२/३
११. तैत्तिरीयोपनिषदि, मनु. पृ. ६३१
१२. मनु. १२/४
१३. मनु. १२/५-७
१४. मनु. २/९२
१५. मनु. २/९३
१६. मनु. २/१००
१७. या.स्मृ. ३/६१
१८. मनु. ६/७१
१९. श्री.भ.गी. १८/१२-१३
२०. मनु. २/१६०
२१. मनु. ४/१६१
२२. मनु. ५/१०९







# धर्मार्थः

डॉ. सिद्धार्थशङ्करदाशः

प्रकृतिपुरुषयोर्मिलनेन सृष्टिः । मूलप्रकृतिरविकृतिः, न प्रकृतिः न विकृतिः पुरुषः चैतन्ययुक्तः । चेतना हि पुरुषस्य पुरुषार्थस्य गुणः । अस्मादेव पुरुषार्थगुणबलाद् मनुष्य प्राणिषु श्रेष्ठः मन्यते । अर्थात् सः इह जगति पुरुषत्वेन विविच्यते । पौरुषहीनस्तु अपुरुष एव किमपि साधयितुं न शक्नोति । पौरुषबलेन हि पुरुषः असम्भवकार्यं सम्भावयति । स्वस्य पुरुषार्थबलेन हि पुरुषः संसारे अमूर्तपदार्थेषु मूर्तरूपत्वं प्रयच्छय जीवति । अतः यावत्पर्यन्तं पुरुषः पुरुषार्थयुक्तो भवति तावत्पर्यन्तं स इह जगति पुरुषत्वेन जीवति अन्यथा सः मृततुल्यो भवति । यतः यावत्पर्यन्तं मानवजीवने किमपि लक्ष्यं न परिलक्ष्यते तावत्पर्यन्तं मानवः एकेन क्रमिकरूपेण कार्यं कर्तुं न प्रयतते नापि तस्य जीवनस्य किमपि मूल्यं विद्यते । अतः मानवजीवने उत्तरोत्तरक्रमिकविकासाय प्राचीनकालाद् पुरुषार्थाणां महत्त्वपूर्णं स्थानं विद्यते । अयं पुरुषार्थः धर्मार्थकाममोक्षभेदैः चतुर्धा विभाज्यते । एते चत्वारः पुरुषार्थाः मानवस्य चतुर्वर्ग इत्यपि कथ्यन्ते । अस्मिन् प्रसंगे केचन् आचार्याः धर्मार्थौ श्रेयस्करौ, एवं केचंस्तु अर्थकामौ श्रेयस्करौ इति वदन्ति । एवमेकेऽस्मिन् सांसारिकजीवने सर्वेषामावश्यकतानामुपपादकहेतुत्वादर्थ एव श्रेय इति वदन्ति । एवमपरेऽर्थकामयोरप्युपायत्वात् धर्म एव श्रेय इति विवेचयन्ति । किन्तु महर्षि मनुना धर्मार्थकामात्मकः परस्पराविरुद्धस्त्रिवर्ग एव पुरुषार्थतया श्रेय इति विनिश्चितः । एवं मुमुक्षूणां तु मोक्ष एव श्रेय इति तेन कथ्यते । यथोक्तं तेन[1]

धर्मार्थावुच्यते श्रेयः कामार्थौ धर्म एव च ।
अर्थ एवेह वा श्रेयस्त्रिवर्ग इति तु स्थितिः ।।

अस्मादवज्ञायते यत् चतुर्षु पुरुषार्थेषु मोक्षमतिरिच्य धर्मादीनां त्रयाणां समप्राधान्यं परिलक्ष्य एतेषां पुरुषार्थाणां तुल्यमुपभोगं कुर्यादिति । अतएवोक्तमस्ति यत् -

धर्मार्थकामा सममेव सेव्याः । इति ।

तर्हि कथं त्रयाणां समबलं साधयिष्यते इति जिज्ञासायामुच्यते -

धर्मेणार्थप्राप्तिः, धर्मार्थाभ्यां कामप्राप्तिः, धर्मार्थकामैश्च मोक्षप्राप्तिरि'ति ।

तत्र नैतिकमूल्यबोधस्य ज्ञापको भूत्वा यथा धर्मः सामाजिक-मानवं सन्मार्गे प्रवर्त्तयति एवं असन्मार्गान्निवर्त्तयति, तथा समाजे जीवनयापनार्थं भौतिकसंसाधनानां परिपूर्णतायै अर्थकामौ मानवेन सेव्यौ । तयोरपि सामाजिकजीवने लोकव्यवहारार्थमर्थस्य महत्त्वं सर्वकालिकम् । यं विना मानवः पङ्गुवत् कुत्रापि गन्तुं न पारयति, अन्धवत् तस्य दृष्टिपथं कुत्रापि न गच्छति, सः किमपि चिन्तयितुं न शक्नोति । एकपदेन कथयामश्चेत् अर्थं विना मनुष्यः किमपि कर्तुं न पारयति । एतद् दृष्ट्वा महताऽर्थशास्त्रकारेण कौटिल्येन[2] 'अर्थ एव प्रधान' इति निर्णीतम् ।

किञ्चार्थस्य माहात्म्यं न केवलमर्थशास्त्रेऽपि तु महाभारतस्य शान्तिपर्वणि पाण्डुपुत्रस्य भीमस्य युधिष्ठिरं प्रत्येवमुक्त्या वर्तते यत् -

यस्य पार्श्वेऽर्थो विद्यते तस्य वहुनि मित्राणि, वहवः बान्धवाः भवन्ति । एवं स एव संसारेऽस्मिन् पुरुष एवं पण्डितरिति कथ्यते । यथोक्तं तत्र[3]

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्था स पुमांल्लोके यस्यार्थाः स च पण्डितः ।।

पुनश्च तत्रैवोक्तमस्ति यत् -

अधनं दुर्बलं प्राहुर्धनेन बलवान् भवेत् ।
सर्वं धनवता प्राप्तं सर्वं तरति कोशवान्[4] ।। इति ।

अतएव उच्यते काव्ये -

'सर्वे गुणाः काञ्चनमाश्रयन्ती' ति ।

तर्हि कोऽयमर्थः ? किं तस्येतिकर्त्तव्यतत्याकाङ्क्षायामुच्यते अर्थशास्त्रकारेण[5] 'मनुष्याणां वृत्तिरर्थ' इति ।

अर्थात् येन मुनष्यः स्वकीयां जीविकां निर्वहति स्वस्थितिञ्च साधयति सोऽर्थः । एवमेतादृशस्यार्थस्याश्रयभूता भवति भूमिः । अतएव 'मनुष्यवती भूमिरर्थरि[6]' ति तेन कथितम् ।

तर्हि जीविकानिर्वाहार्थं यस्यार्थस्येत्थं महत्त्वं तस्योपार्जनं कथं कुर्यादिति हेतोरुच्यते शास्त्रेषु यदर्थः धर्मेणार्जयितव्यरिति । उच्यते महाभारते यदर्थेण धर्मकामलोकपरलोकानां सिद्धिर्जायेते ।

अतोऽस्यार्थस्योपार्जनं धर्मेण सर्वथा कुयात्र तु अधर्मेण इति । यदुक्तं तत्र[7]

कोशेन धर्मः कामश्च परलोकस्तथा ह्ययम् ।
तं च धर्मेण लिप्सेत नाधर्मेण कदाचन ।। इति ।

किञ्च अर्थशास्त्रकारेणापि कौटिल्येन 'धर्मानुकूलौ अर्थकामौ' इति कथितमस्ति । अर्थात् अर्थः धर्मानुकूलो भवेत् । एवं धनसञ्चयं स्वैः अगर्हितैः कर्मभिः शरीरस्याक्लेशेन केवलं यात्रामात्रनिर्वाहार्थमेव कुर्यादिति नियमः महर्षिणा मनुना प्रदिष्टः । यथोक्तं तेन[8]

यात्रामात्रप्रसिद्ध्यर्थं स्वैः कर्मभिरगर्हितैः ।
अक्लेशेन शरीरस्य कुर्वीत धनसंचयम् ।।' इति ।

यतोऽधिकधनसञ्चयेन शरीरस्य क्लेशं तु भवत्येव अपि च तादृशोऽर्थः अनर्थस्य कारणं भवति । यतोहि धनदम्भेन मनुष्य प्रायतोऽधर्ममार्गे प्रचलति । कदाचित् अधिकधनमपि चौर्य्यभयात् दुःखस्य कारणं भवति । अर्थोपार्जनकाले कदाचिदपि अन्यस्यार्थापहरणं ग्रहणं वा न कुर्यात् । यतः अस्मिन् जगति जीवनयापनाय सर्वं विद्यते । तस्मादानीय जीवेत् इति ईशावास्योपनिषदपि उच्चस्वरेण भणति । उक्तं यत् -

ईशावास्यमिदं सर्वं यत्किंचित् जगत्यां जगत् ।





तेन त्यक्तेन भुंजीथा मा गृधः कस्यस्विद्धनम् ।। इति ।

तर्हि धर्मेणार्थप्राप्तिः कथं भविष्यति ? किम्वा के तत्र उपायाः इति साक्षान्महर्षिः मनुः[9] वदति यत्

सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः ।
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ।। इति ।

सम्प्रति एतेषां धनागमोपायाणां वर्णनं क्रमशो क्रियते ।

१) दायः - 'दायशब्देन यद्धनं स्वामीसम्बन्धादेव निमित्तादन्यस्य स्वं भवती'ति[10] विज्ञानेश्वरस्य दायलक्षणम् । तथैव 'दीयते इति व्युत्पत्त्या दायशब्दो ददातिप्रयोगश्च गौणः, मृतप्रव्रजितादिस्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्तिफलसाम्यात्, न तु मृतादीनां तत्र त्यागोऽस्ति । ततश्च पूर्वस्वामिसम्बन्धाधीनं तत्स्वाम्योपरमे यत्र द्रव्ये स्वत्वं तत्र निरूढो दायशब्द[11]' इति जीमूतवाहनस्य दायलक्षणम् । पुनश्च व्यहारमयूखकारेण नीलकण्ठभट्टेन 'असंसृष्टं विभजनीयं धनं दायः[12]' इति लक्षणं प्रतिपादितम् । एवमेव विज्ञानेश्वरनीलकण्ठभट्टयोर्मते दायशब्दोरूढः, जीमूतवाहनमते तु दानसाम्याद्गौणः । निरुक्तकारेण यास्केन विभक्तव्यं पितृद्रव्यं दायमाहुर्मनीषिण[13]' इति दायलक्षणं विहितमस्ति । अतएव दायशब्दः न यौगिकः अपि तु पैतृकधनार्थे निरूढः । अयञ्च दायः अप्रतिबन्धसप्रतिबन्धभेदाभ्यां द्विधा । तत्र पुत्राणां पौत्राणाञ्च पुत्रत्वेन पौत्रत्वेन च पितृधनं पितामहधनञ्च स्वं भवतीत्यप्रतिबन्धो दायः । एवं पितृव्यभ्रात्रादीनां तु पुत्राभावे स्वाम्यभावे च स्वं भवतीति सप्रतिबन्धो दायः[14] ।

अतः पितृपितामहप्रपितामहादीनां माध्यमेन आगतं धनं पुत्रपौत्रप्रपौत्राणां शास्त्रानुसारं दायो भवति । यदुक्तं स्मृतिसंग्रहे[15]-

पितृद्वारागतं द्रव्यं मातृद्वारागतं च यत् ।
कथितं दायशब्देन तद्विभागोऽधुनोच्यते ।।

अत एव शास्त्रोक्तविधिना दायमाध्यमेन आगतं (प्राप्तं) धनं धर्म्यं भवति ।

२) लाभः - 'मूलधनादितोऽधिकेः लभ्यमाने धने लाभः' इति अमरः । यस्तु कुसीदमित्यपि वक्तुं शक्यते । पुनश्च मौत्रादिलब्धं धनमपि लाभ इति कथ्यते । यदुक्तं कुल्लूकभट्टेन[16] 'लाभो निध्यादेः मैत्र्यादिलब्धस्य च' इति ।

तथैव क्षेत्रेषु स्वत उत्पननानि शस्यादीनि क्षेत्रवत एव लाभो भवति । एवं मार्गात् निध्यादेः प्राप्तिर्नामोऽधिगमोऽपि लाभत्वेन कथ्यते । अर्थात् लाभः नाम आङ्लभाषायां (Extra Income) किम्वा (Outsource) इति वक्तुं शक्यते । यथा रिक्थ-क्रय-संविभागपरिग्रहाधिगमाः साधारण्येन स्वत्वहेतवः भवन्ति किन्तु तत्रैव ब्राह्मणस्य प्रतिग्रहत्वेन प्राप्तं धनमधिकं भवति एवं भावेन क्षत्रियस्य युद्धेन विजितं, वैश्यशूद्रयोः निर्विष्टञ्चाधिकं धनं भवति विशेषेण । एवं रूपेण साधारणतः लाभशब्दः लौकिकतया प्रयुज्यते तथा नियमतः सर्वैः स्वीक्रियते च । अतः लाभोऽपि धनागमस्यैकः धार्मिक उपायः ।

३) क्रयः - समुचितमूल्यप्रदानेन द्रव्यस्वीकारः क्रयः । स च क्रयः प्रकाशतः नाम सर्वसमक्षे आपणात् विपणीमध्याद्वा क्रीते सति शुद्धो भवति अन्यथा स क्रेतुः स्तेयं भवति । यथोक्तं नारदेन[17] - 'प्रकाशतः

क्रयः शुद्धः क्रेतुः स्तेयं रहः क्रयात्' इति । तत्र अप्रकाशिते नाम गोपिते रहसि अर्थात् एकान्ते हीनमूल्ये वेलाहीने (रात्र्यादौ) च यदि क्रयः क्रियते, तर्हि तत्र क्रेता तस्करो भवति । अर्थात् एतादृशो क्रयः शुद्धो न भवति । यदुक्तं याज्ञवल्क्येन[१८] 'हीनाद्रहो हीनमूल्ये वेलाहीने च तस्करः ।' इति ।

तथैव आगमोपायहीनादपि द्रव्यस्वीकारे तत्र क्रयसिद्धो न भवति । तत्र स्वत्वहेतुः प्रतिग्रहक्रयादि आगमः । अतः विशुद्धेन आगमप्रमाणेन क्रयादिः शुद्धं भवति । एतदर्थं लेख्यप्रमाणं क्रियते । एतद् क्रयलेख्यमित्युच्यते । उक्तं यत् बृहस्पतिना[१९]

गृहक्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम् ।
पत्रं कारयते यत्तु क्रयलेख्यं तदुच्यते ।। इति ।

अस्मादेव विज्ञायते यदुचितमूल्यप्रदानेन प्रकाशतः वेलायां सप्रमाणं आपणात् कस्मांश्चिज्जनसकाशद्वा द्रव्यस्वीकरणेन यः क्रयो भवति सः क्रेतु स्वत्वं भवति । अर्थात् एतादृशोऽपि विशुद्धः क्रयः धनागमस्य धर्म्योपायो भवतीति शास्त्रसम्मतम् ।

४) जयः - सर्वभूतानां रक्षणमभिषिक्तस्य राज्ञः परमो धर्मः । स च संधिविग्रहादिगुणैः संभाव्यते । एतान् गुणान् राजा यथावत्परिकल्पयेदिति याज्ञवल्क्येन प्रोक्तम् । यथोक्तं तेन[२०]

संधिं च विग्रहं यानमासनं संश्रयं तथा ।
द्वैधीभावं गुणानेतान् यथावत्परिकल्पयेत् ।।

एतेषु यानमाध्यमेन रिपूणां परिमर्दनं भूमेरुपार्जनं च राजवृत्तं भवति । यदुक्तं शुक्राचार्येण[२१]

करदीकरणं राज्ञां रिपूणां परिमर्दनम् ।
भूमेरुपार्जनं भूयो राजवृत्तं तु चाष्टधा ।।

तत्र यदा परराष्ट्रं शस्यगुणोपेतं, शत्रुश्च वलादिभिः हीनस्तथा स्वयं च हृष्टवाहनपूरुषो भवति, तदा यानम् अर्थात् युद्धं करणीयम् इति याज्ञवल्क्येनोक्तम् । तत्र युद्धे विजययोगः राज्ञः धर्मो भवति । यथोक्तं गौतमेन[२२]

'योगश्च विजये' इति ।

तत्रापि संग्रामे विजयेन लब्धं धनं जेता लभेत् इति तेनैवोक्तम् । उक्तं यत् तेन -

'जेता लभेत् सांग्रामिकं वित्तम्[२३] ।' इति

एवं तत्र हस्त्यश्वादिकं विजितं वाहनं राज्ञो भवति 'वाहनं तु राज्ञः' इति तेनैव प्रतिपादितम् ।

५) प्रयोगः - ऋणादाने वृद्ध्यर्थं धनप्रयोगः प्रयोगः । ऋणादाने उत्तमर्णः (ऋणदाता) अधमर्णाय वृद्ध्या ऋणं प्रयच्छति । सा च वृद्धिः कायिका - कालिका - कारिता - चक्रवृद्धिभिः भेदैः चतुर्धा । एतासां स्वरूपमाह बृहस्पतिः[२४]

कायिका कायसंयुक्ता मासग्राह्या च कालिका ।
वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिता ऋणिना कृता ।।

कात्यायनेनाप्यस्य स्वरूपं निरूपितं यथा[२५]





ऋणिकेन तु या वृद्धिरधिका संप्रकल्पिता ।
आपत्कालकृता नित्यं दातव्या कारिता तु सा ।।
प्रतिकालं ददात्येव शिखावृद्धिस्तु सा स्मृता ।।

किन्तु एताः चतस्रोऽपि वृद्धीरशास्त्रीयात् ऋणिकेन न ग्रहीतव्याः । अपि तु शास्त्रीयविध्यनुसारं सर्वथा धनप्रयोगं कृत्वा तत्र वृद्धिं गृह्णीयात् धनिकः । प्रसङ्गेऽस्मिन् यदुक्तं मनुना[२६]

नातिसांवत्सरीं वृद्धिं न चादृष्टां पुनर्हरेत् ।
चक्रवृद्धिः कालवृद्धिः कारिता कायिका च या ।।

तत्र धनिकः आधिं, साधुलग्नकं बन्धं वा गृहीत्वा लेख्यरूढं साक्षिमद्वा धनस्य प्रयोगं कुर्यात् । यथोक्तं वृहस्पतिना[२७]

परिपूर्णं गृहीत्वाधिं बन्धं वा साधुलग्नकम् ।
लेख्यारूढं साक्षिमद्वा ऋणं दद्याद्धनी सदा ।।

तत्र वृद्धिग्रहणस्य शास्त्रीयविधिरुक्तः याज्ञवल्क्येन[२८]

अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके ।
वर्णक्रमाच्छशं द्वित्रिचतुः पञ्चकमन्यथा । इति ।।

एवमन्येऽपि नियमाः शास्त्रे उद्दिष्टाः सन्ति । येषामा-चरणपूर्वकं ऋणप्रयोगेन धनिकस्य वृद्धिग्रहणं धर्म्यं जायते । अस्मादेव ज्ञायते यत् विधिपूर्वकं वृद्ध्या धनप्रयोगेण प्राप्तं धनमपि उत्तमर्णस्य स्वत्वहेतुर्भवति इति ।

६) कर्मयोगः - कर्मणा योगः कर्मयोगः । कर्मयोगश्च कृषिवाणिज्ये इति कुल्लूकभट्टेनाभिलक्षितम् । कृषिः कर्षणेन शस्योत्पादनं वाणिज्या क्रयविक्रयव्यवहारः । एतौ प्रयोगौ वैश्यस्य धर्म्यौ[२९] । विकल्पेन एतौ ब्राह्मणस्यापि धर्म्यौ भवतः यदि अन्येन कार्यते । यथोक्तं गौतमेन[३०] 'कृषिवाणिज्ये वाऽस्वयंकृते ।' इति ।

७) सत्प्रतिग्रहः - प्रतिग्रहः ब्राह्मणस्यैव धर्म्यो भवति । यदुक्तं याज्ञवल्क्येन[३१]

इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च ।
प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा ।।

परन्त्वयं प्रतिग्रहः तस्य सत्प्रतिग्रहो नाम विशुद्धात् प्रतिग्रहो भवेत् । यथोक्तं मनुना[३२]

षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका ।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ।।

विशुद्धप्रतिग्रहस्तु तत्रैव कुल्लूकभट्टेन प्रदर्शितः यथा -

द्विजातिभ्यो धनं लिप्सेत्प्रशस्तेभ्यो द्विजः' इति

वचननिर्देशात् द्विजातेः प्रतिग्रहः सत्प्रतिग्रह। अतः द्विजातिभिन्नेभ्यो प्रतिग्रहं न कुर्यात् । किन्तु यदा विप्रः लोभेन शूद्रादिभ्यो प्रतिगृह्णाति तदा सः चौरवद्भवतीति साक्षाद् मनुना भणितम् । यदुक्तं तेन[३३]

योऽदत्तादायिनो हस्तात्लिप्सेत ब्राह्मणो धनम् ।
याजनाध्यापनेनापि यथा स्तेनस्तथैव स: ।।

अत: विशुद्धमतिग्रहोऽपि ब्राह्मणस्य धर्म्यो भवति ।

अत: उपरोक्तविचाराद् ज्ञायते यत् शास्त्रीयपद्धत्या क्रियमाणा: दाय-लाभक्रयादय: मानवस्य धर्म्यो भवतीति निश्चप्रचं वक्तुं शक्यते । येन मनुज इह जन्मनि चिरन्तनमुत्थानं सम्प्राप्य परेऽनन्तलोकं सम्प्राप्नोति ।

अत: सर्वे जना: सन्मार्गेण यथावश्यकीयं धनमुत्पाद्य स्व-स्व सर्वाङ्गीणमुन्नतिं संसाध्यन्तु इति अलम् ।

१. मनु.२/२२४ २. कौ.अ., १/७/१०
३. महा.शान्ति., १६/५० ४. तत्रैव. १३०/४९
५. कौ.अ. १५/१/१ ६. तत्रैव. १५/१/२
७. महा.शान्ति.१३०/५० ८. मनु., ४/३
९. मनु.१०/११५ १०. मिता.पृ.२१६
११. दा.भा., पृ. २ १२. व्य.म., पृ. ५८
१३. तत्रैव १४. मिता.पृ. २१६
१५. व्य.म., पृ. ५८ १६. मनु.मन्वर्थ. १०/११५
१७. व्य.म., पृ. १२१ १८. या.स्मृ.२/१६८
१९. व्य.म., पृ. १६ २०. या.स्मृ. १/३४७
२१. शु.नी. १/१२४ २२. गौ.ध.सू. २/१/१३
२३. तत्रैव. २/१/२० २४. मनु.मन्वर्थ, ८/१५३
२५. तत्रैव २६. मनु. ८/१५३
२७. व्य.म., पृ. १०४ २८. या.स्मृ., २/३७
२९. मनु.मन्वर्थ. १०/११५ ३०. गौ.ध.सू. २/१/१५
३१. या.स्मृ. १/११८ ३२. मनु.१०/७६
३३. मनु.८/३४०







# मासनिर्णय:

डॉ. इतिश्री महापात्र

धर्मार्थकाममोक्षेषु चतुर्विधेषु पुरुषार्थेषु धर्म: श्रेष्ठ: प्रमुखश्च । धर्माधारेणैवान्येषां पुरुषार्थाणां पालनं क्रियते । धर्मं विहाय न कस्यापि पुरुषार्थस्य पालनं स्मृतिकारैरुपदिष्टम् । धर्मणैव नियन्त्रित: मनुष्य: समाजे प्रशंसितो भवति । धर्मशास्त्रं मनुष्यस्य शृङ्खलितजीवनधारणायैवोपदिष्टम् । मनुष्यस्य पारमाङ्क्षितपुरुषार्थाणां वर्णनं धर्मशास्त्रे सन्निविष्टं वर्त्तते । धमदिवेहलौकिकं पारलौकिकं च सुखं जायते । अत: पुरुषार्थचतुष्टयप्राप्यते धर्मशास्त्रमेव सर्वथाऽऽदरणीयं भवति सर्वेषाम् ।

धर्मस्य महत्वं सर्वजनविदितम् । अनियतेऽपि संसारे धर्मस्यैव नियतत्वं सर्वैरनुभूयते । तस्यैव धर्मस्य प्रतिपादकशास्त्रत्वेन धर्मशास्त्रस्यापि महत्वमत्यन्तं राजते । धर्मशास्त्रमेव मानवचरित्रस्य नियामकम् । धर्मशास्त्रस्योद्देश्यं प्रत्यक्षसिद्धम् । मनुष्यस्य स्वाभिलषितपदार्थप्रतिपादनमेव धर्मशास्त्रस्योद्देश्यम् ।

धर्मशास्त्रेषु नैके विषया: विवेचिता: प्राप्यन्ते । तेषु "मानवानां हितं धर्म:" इति वचनानुसारेण धर्मानुष्ठानार्थं कालस्य महत्वं सर्वथा विश्रुतम् ।

"काल" संख्याने इत्यस्माद्धातोर्घञ्प्रत्यये कृते कालशब्दों निष्पद्यते । कलयति जगदेष कालोऽपि इति व्युत्पत्त्या जगदाधाररुपेण काल: प्रतिपादित: । तादृशोऽपि कालो येन कल्यते स कालकालो महाकाल: परमेश्वरोऽनादिनिधनत्वेन च वर्ण्यते । एवं प्रकारेण केवलकाल: कालश्चेति कालस्य द्वैविध्यं परिलक्ष्यते । तत्र केवलकाल: सामान्यकालशब्देन जन्यकालत्वेन मासतिथ्यादिस्वरुपं, कालकालश्च महाकालशब्देन नित्यकालत्वेन सृष्टिस्थितिलयकारिणो विष्णो: स्वरुपञ्च बोधयति ।

अयञ्च कालशब्द: मासपक्षतिथ्यादे: परिमाणवाचकत्वेन ज्योति:शास्त्रे प्रसिद्ध: । तस्यैव कालस्य धर्मानुष्ठानहेतुत्वेन श्रौतस्मार्तकर्मणामङ्गरुपेण निर्देशो धर्मशास्त्रेषु कृत: । अत: कर्माङ्गत्वेन कालस्योपयोगात् धर्मशास्त्रेषु कालस्य तदवयवानाञ्च प्रयोगो दृश्यते । तथा हि भगवता [1] मनुना "कालं" "कालविभक्तीश्च" इत्यादिना याज्ञवल्क्येन [2] "श्राद्धकाला: प्रकीर्त्तिता:" इत्यादिना च कालशब्दस्य प्रयोग: कृत: । एवं प्रकारेण न केवलं स्मृतिषु धर्मसूत्रेषु धर्मनिबन्धेषु च कालस्य धर्मानुष्ठानहेतुत्वेन चर्च्चा भूयस्त्वेन दृश्यते । एतदतिरिक्तं श्रुति-पुराणकोषादिषु शास्त्रान्तरेषु च कालस्य विवेचनं प्रसङ्गतोऽपि कृतं दृश्यते ।

धर्मशास्त्रे, ज्योतिश्शास्त्रे, पुराणेषु च कालक्रमेण कालमाश्रित्य प्रवर्तमानायां समरसतायाम् अन्तरमापतितम् । काले एव कर्मण: प्रसक्तत्वाद् ज्योतिषशास्त्रीये काले, कर्मकाले च महती विषमता अन्वभूयते ।

काले एव कर्म अनुष्ठीयते न तु कर्मणि काल: इति धर्मशास्त्रेषु कर्मकालस्य प्राधान्यं प्रतिपाद्यते । धर्मशास्त्रे काल: षोढा विभक्त: । तद्यथा- १.अब्द:, २.अयनम्, ३.ऋतु:, ४.मास:, ५.पक्ष:, ६.दिवसश्च ।

एषु कालेषु मासोऽन्यतमः ।

"मस" परिमाणे इत्यस्मात् धातोः घञ् प्रत्यये कृते मासशब्दोः निष्पद्यते । अयं सम्वत्सरस्य द्वादशभागः इति ।

यद्यपि मस्यते परिमीयते चन्द्रवृद्धिक्षयादिना इति व्युत्पत्त्या मासशब्दः चान्द्रमासे रूढः, तथापि सौरादिमासः लक्षणया प्रयुज्यते । अतः मासः त्रिविधः चान्द्रः सावनः सौरश्च इति । नीलकण्ठभट्टेन माधवाचार्य्योद्धृतब्रह्मसिद्धान्तवचनं प्रतिपाद्य उक्तं यत् -[3]

चान्दशुक्लादिदर्शान्तः सावनस्त्रिंशता दिनैः ।
एकादशौ रविर्यावत् कालं मासं सः भास्करः ।। इति ।।

किन्तु समयप्रकाशकारणे मित्रमिश्रेण मासस्य चातुर्विध्यं प्रतिपादितं चान्द्रसौरसावननाक्षत्रभेदेन । तेन ज्योतिषशास्त्रवचनमुत्थाप्यप्रतिपादितं यत् -

प्रथमः सावनमासः द्वितीयश्चान्द्र उच्यते ।
नाक्षत्रस्तु तृतीयः स्यात् सौरमासश्चतुर्थकः ।।

एतेषु मासानाम् उपयोगः वर्णभेदेन प्रदर्शितः । तत्रब्राह्मणानां कृते अमान्तचान्द्रमासः क्षत्रियाणां सौरमासः वैश्यानां कृते पूर्णिमान्तश्चान्द्रमासः व्यवस्थापितः । चान्द्रः द्विविधः (१)अमान्तः (२)पूर्णिमान्तः । शुक्लप्रतिपद आरभ्य अमान्तं यावत् अमान्तचान्द्रः । कृष्णप्रतिपदः आरभ्य पूर्णिमान्तश्चान्द्रश्चेति । यतो हि शुक्लप्रतिपदि जगतः सृष्टिरभूत् ।

संक्रान्तेः संक्रान्त्यवधिः सौरः त्रिंशद्भिः सौरदिनैः एकः सौरमासः । त्रिंशद्भिः चान्द्रदिनै अर्थात् तिथिभिः एकश्चान्द्रमासः, त्रिंशद्भिः सावनदिनैः (एकस्मात् सूर्योदयादारभ्यापरसूर्योदयं यावत्) एकः सावनमासः परिकल्पितः । नाक्षत्रमासस्य धर्मशास्त्रे उपयोगिता नास्ति ।

चान्द्रसौरमासयोः युगपत् प्रचलनं भवति । सौरमासानुसारेण उपनयनविवाहादिसंस्काराः, चान्द्रमासानुसारेण पैतृकश्राद्धकर्माणि, सावनमानेन सत्रानुष्ठानमित्यादिप्रकारणे मासानामुपयोगः । मध्यममानेन गणनयां द्वात्रिंशर्द्भिमासैः षोडशदिनैः घटिकाचतुष्टयेन एकवारमधिमासः पतति । कदाचित् क्षयमाससंज्ञक मलमासोऽपि भवति । तस्मिन् मलमासे श्रौतं स्मार्तं च कर्म त्याज्यं भवति । एतेन मासस्यापि उपयोगः कथितः ।

मासमध्ये मलमासः अन्यतमः । स मलमासः द्विविधः (१)क्षयमासः (२)अधिमासश्च ।

मलमासो नाम अधिकमासः अथवा अधिमासः । स चाधिमासः कदा पततीति जिज्ञासायां कथ्यते यत् यदा दर्शान्तः चान्द्रमासः असंक्रान्तो भवति तदा मलमासः पतति । यथोक्तं सिद्धान्तशिरोमणौः-[4]

गतोऽब्ध्यद्रिनन्दैर्मिते शाककाले
तिथीशैर्भविष्यत्यथाङ्गाक्षसूर्यैः ।





गजाद्यग्निभूमिस्तथा प्रायशोऽयं
कुवेदेन्दुवर्षैः क्वचिद्गोकुभिश्च ।। इति ।।

स च मासः कथं पतति इति वीक्षायां कथ्यते यत् चान्द्रसंवत्सरात् सौरसंवत्सरः एकादशभिर्दिनैरतिरिच्यते । तथा च चान्द्रसंवत्सरद्वयात् सौरसंवत्सरो द्वाविंशतिदिवसैः चान्द्रमासाष्टकात् सौरमासाष्टकं सार्द्धसप्तभिर्दिनैरतिरिच्यते । एवं मिलित्वा स दिनार्द्धन्यूनमासोऽधिको भवति । पुनश्च षोडशचान्द्रदिनेभ्यः षोडशभिर्दिनैर्घटिकानां चतुष्टयेन च त्रिंशत्सावनदिनानि अधिकानि भवन्ति । तेन एको मासो योऽधिको दृश्यते, स त्वधिमासशब्देन व्यवह्रियते इति ।

अनुबन्धाध्यापिका, धर्मशास्त्रम्
अगरतला, त्रिपुरा

सन्दर्भः -
१.म.स्मृ.-१-२४
२.याज्ञ. आ.-२१८
३.कालमाधवः द्वितीयप्रकरणम् पृ-४५
४.कालमाधवः पृ-६२

◆◆◆

# आश्रमेषु नित्यभोजनव्यवस्था

डॉ. मनोजकुमारसाहु:

मानव: शतं वर्षाणि यावत् जीवति । मानवस्य समग्रायु: चतर्भि: आश्रमै: विभक्तम् । यथा- जन्मत: पञ्चविंशर्षाणि यावत् ब्रह्मचर्याश्रम:,तत: पञ्चाशत् वर्षाणि यावत् गृहस्थाश्रम: ,तत:पञ्चसप्तति: वर्षाणि यावत् वानप्रस्थाश्रम: तथा अन्तिमे शतवर्षाणि यावत् सन्यासाश्रमो भवति ।

वर्णानुसारं ब्रह्मचर्याश्रमे ब्राह्मण-क्षत्रियवैश्यानां ,गृहस्थाश्रमे ब्राह्मण-क्षत्रिय-वैश्य-शूद्राणां ,वानप्रस्थाश्रमे च द्विजानां तथा सन्यासाश्रमे केवलं ब्राह्मणस्यैव अधिकारोऽस्ति । वर्णानुसारं कर्माण्यपि भिन्नानि सन्ति । नित्यकर्मरुपेण ब्राह्मण-क्षत्रिय-वैश्यानां त्रीणि कर्माणि निर्दिष्टानि। यथा-यजनाध्ययन-दानानीति मन्वादिस्मृतिकारणामभिप्रायोऽस्ति[1] । ब्राह्मणस्य त्रीणि विशिष्टानि कर्माणि सन्ति, यथा- प्रतिग्रह-याजनाध्यापनानीति । क्षत्रियस्य प्रजापालनमेव प्रधानं कर्मं । वैश्यस्य कृषि-गोरक्षा-वाणिज्यानि प्रधानकर्माणि सन्ति । शूद्र: त्रयाणां वर्णानां सेवयैव स्वजीवनं निर्वहति । सर्वे प्राणिन: भोजनेनैव जीवनं धारयन्ति । भोजनं विहाय न कोऽपि प्राणी जीवितुं शक्नोति । अत: मनुष्योऽपि भोजनैव जीवति ।तर्हि सर्वेषु आश्रमेषु नित्यभोजनव्यवस्था: समा: सन्ति विषमा: सन्ति वा अत्र सन्देहो जायते । एतदर्थं प्रथमतया स्मृतिकारानुसारं ब्रह्मचर्याश्रमे भोजनव्यवस्थां निरुप्यते यथा-

भोजननिमित्तं ब्रह्मचारी प्रत्यहं भिक्षाचरणं कुर्यात् । भिक्षायाचनकाले ब्राह्मणब्रह्मचारी भवति भिक्षां देहि ,क्षत्रियब्रह्मचारी भिक्षां भवति देहि तथा वैश्यब्रह्मचारी भिक्षा देहि भवतीति वदेयु: इति धर्मशास्त्रकाराणामतमस्ति । यथा-

भवत्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तम: ।
भवत्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम् ।।[2]
आदिमध्यावसानेषु भवच्छब्दोपलक्षिता ।
ब्राह्मणक्षत्रियविशां भैक्षचर्या यथाक्रमम् ।।[3]
आदिमध्यान्तेषु भवच्छब्द: प्रयोज्यो वर्णानुक्रमेण ।[4]

भवत्पूर्वां भिक्षामध्यां याञ्चान्तां चरेत् सप्ताक्षरां क्षां च । हिङ्कं न वर्धयेत् । भवत्पूर्वा ब्राह्मणो भिक्षेत्,भवत् मध्यां राजन्यो भवदन्तां वैश्यस्सर्वेषु वर्णेषु ।[5]

भवत्पूर्वया ब्राह्मणो भिक्षेत् ।भवत्मध्यया राजन्य: । भवदन्तया वैश्य: ।[6]

सर्वै: धर्मशास्त्रकारै: भिक्षाचरणनियमा: यद्यपि समाना: कथिता: तथापि बौधायनेन विशेषेण सप्ताक्षरावाक्ये क्षांच हिं च शब्दौ न वर्धयेताम् इति उक्तम्। ब्रह्मचारी उपनयनाङ्गभूतां भिक्षां प्रथमं मातरं भगिनीं वा ,मातुर्वा भगिनीं याचेत् या च नावमन्येत् । भैक्ष्य समाहृत्य अमायया गुरवे निवेद्य,तदनुज्ञात: आचम्य शुचि: सन्





प्राङ्मुख: भुञ्जीत । दिशानुसारं भोजनेन फलान्यपि प्राप्यन्ते यथा-

आयुष्यं प्राङ्मुखो भुंक्ते यशस्यं दक्षिणामुख: ।
श्रियं प्रत्यङ्मुखो भुंक्ते ऋतं भुंक्ते ह्युदङ्मुख: ।।[7]

अनेन ज्ञायते प्राक्-दक्षिण-पश्चिमोत्तराभिमुखभोजनै: यथाक्रमं आयु-यश-धन-सत्यानि प्राप्यन्ते । आचमनविधौ विद्यते यत् द्विज: ब्रह्मचर्यावस्थायां तदन्तरञ्च समाहित: सन् भोजनस्य आदौ अन्ते च त्रि: आचम्य जलेन शिर: स्थानि-घ्राण-चक्षु-श्रोत्रादीनि षट् छिद्राणि स्पृशेत्[8]। भोजनं तु सदा हृष्टमनसा कुर्यात् । यतो हि हृष्टभोजनेन बलमूर्जं वर्धते तथा विषण्ण मनसा भोजनेन बलमूर्जञ्च नश्यते । ब्रह्मचारी स्वमुच्छिष्टं कस्मै न दद्यात् । तथा अपरमुच्छिष्टं न भक्षयेत् । सायं प्रात: अन्तरा भोजनं न कुर्यात् । अतिभोजनं वर्जयेत् । यतो हि मनुनोक्तं-

'अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनम् ।
अपूण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जयेत् ।।[9]

ब्राह्मण-क्षत्रिय-वैश्यानामाचमनविधयस्तु केचन् भिन्ना: सन्ति । ब्राह्मण:तावत्परिमाणेन शुद्धजलेन आचमनं कुर्यात् यत्तु तस्य हृदयं यावत् गच्छेत् । क्षत्रिय: तावत्परिमाणेन जलेन आचमेत् यत्तु तस्य कण्ठं यावत् गच्छेत् । वैश्य: मुखं यावत्, शुद्रस्तु स्पृष्टभिरद्भि: आचमेताम् । यथोक्तमस्ति मनुस्मृतौ-

हृद्गाभि: पूर्यते विप्र:कण्ठगाभिस्तु भूमिप: ।
वैश्योऽद्भि: प्राशिताभिस्तु शूद्र: स्पृष्टाभिरन्तत: ।।[10]

ब्रह्मचारी मधुमांसादिकं वर्जयेत् । अनेन प्रकारेण ब्रह्मचर्याश्रमे नित्यभोजनव्यवस्था निरुपिता । गृहस्थाश्रमस्य नित्यभोजनव्यवस्थां निरुप्यते । प्रत्यहं पञ्चमहायज्ञानन्तरं गृही भोजनव्यवस्था कुर्यात् । महायज्ञा: यथा-

अध्यापनं ब्रह्मयज्ञ: पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतौ नृयज्ञोऽतिथिपूजनम् ।।[11]
बलिकर्मस्वधाहोमस्वाधायातिथिसत्क्रिया: ।
भूतपित्रमरब्रह्ममनुष्याणां महामखा: ।।[12]

गृहस्थ: कदापि केवलं स्वनिमित्तं भोजनं न पचेत् । अनेन पापं भवति । यतो हि उक्तमस्ति-

न पचेदन्नमात्मने ।।[13]
केवलाघो भवति केवलादी ।[14]

अत: बाल–सुवासिनी-वृद्धगर्भिण्यातुरकन्यका: अतिथिभृत्यांश्च भोजयित्वा पतिपत्नी भोजनं कुर्याताम्।[15] यदि भोजनकाले आचार्यादय: आगच्छेयु: तदा सिद्धमन्नं तेभ्यो निवेद्य ततोऽन्नक्रिया तदिच्छात: कर्तव्या। द्विजातय: भोजनात्पूर्वं परञ्च आपोशन..... इति मन्त्रेण आचमनेन उदरस्थमन्नमनग्नममृतञ्च कुर्यु: । गृही वर्णक्रमेण आगतान् अतिथीन् सखिसम्बन्धिबान्धवांश्च भोजयेत् । चतुराश्रमेषु ब्रह्मचर्य-वानप्रस्थ-

गृहस्थस्तु सर्वश्रेष्ठ: इत्युच्यते । यथोक्तमस्ति-
सन्यासाश्रमीणां गृहस्थाश्रमात् ज्ञानान्नप्राप्तिहेतो:

यस्मात्त्रयोप्याश्रमिणो ज्ञानेनान्नेन चान्वहम् ।

गृहस्थेनैव धार्यन्ते तस्माज्ज्येष्ठाश्रमो गृही ।।[१६]

अनेन प्रकारेण गृहस्थाश्रमस्य नित्यभोजनव्यवस्था निरुपिता । सम्प्रति वानप्रस्थाश्रमस्य भोजनव्यवस्था आलोच्यते । मनु-याज्ञवल्क्यौ विहाय प्रायश: सर्वे धर्मशास्त्रकारा: वानप्रस्थिन: ग्रामान्नभोजनं नाङ्गीकुर्वन्ति। यथोक्तमस्ति याज्ञवल्क्यस्मृतौ-

ग्रामादाकृत्य वा ग्रासानष्टौ भुञ्जित: वाग्यत: ।

वायुभक्ष: प्रागुदीचीं गच्छेद् वाऽऽवर्ष्मसंक्षयात् ।।[१७]

अत्रापि अष्टग्रासभोजनस्य तापसेषु विप्रेषु वनवासिषु गृहमेधिषु द्विजेषु एकदिवसनिमित्तं भैक्ष्यमाहरेत् । व्यवस्था विद्यते । यथोक्तमस्ति मनुस्मृतौ-

एष: तापसेष्वेव विप्रेषु यात्रिकं भैक्ष्यमाहरेत् ।

गृहमेधिषु चान्येषु द्विजेषु वनवासिषु ।।[१८]

अनेन ज्ञायते वानप्रस्थी वनफलमूलै: सह कदाचित् ग्रामलब्धभिक्षया सह उदरपोषणं कुर्यात् । कानि द्रव्याणि खादेदिति शङ्कयामुच्यते वन्यजातमुन्यन्नै: देवेभ्य: हुत्वा स्वयं खादेत् । स्वयं कृतं लवणं व्यवहरेत्[१९] । अन्ते स्वयमेव वृक्षात् पतितानि फलानि पत्राणि च खादेदिति आपस्तम्बेनोक्तं यत्- अन्नत: प्रवृतानि[२०]। वृक्षेभ्य: स्वयं पतितानि पत्र-फल-मूलानि खादेत् , न तु स्वयमुत्पाद्य खादेदिति मनुगौतमयोरभिप्रायोऽस्ति[२१] फलमूलानि कथं खादेदिति शंकयामुच्यते अश्मकुट्टकेन दन्तोलुखलेन वा कालपक्वं द्रव्यं खादेत् । परन्तु मनुना एतै: सह अग्निपक्वं भोज्यं योजित । यथोक्तमस्ति-

अग्निपक्वाशनो वा स्यात् कालपक्वभुगेव वा ।

अश्मकुट्टो भवेद्वाऽपि दन्तोल्लूखलिकोऽपि वा ।।[२२]

स्थलजौदकशाकानि,मेध्यवृक्षोद्भवानि, स्नेहद्रव्याणि, पुष्पसमूहफलानि च भक्षयेत् । मधु-मांस-भौमकवकानि भूस्तृण-शिग्रुक-श्लेष्पातकफलानि च वर्जयेत् । पूर्वसंचितानि मुन्यन्नानि,शाकमूलानि च आश्वयुजे मासि त्यजेत् । फालकृष्टमुत्सृष्टमपि न खादेत् । एकं दिवस्यनिमित्तं ,मासनिमित्तं,षडमासनिमित्तं,सर्वाधिकमेकवर्षनिमित्तं वा वानप्रस्थी मुन्यन्नानि सञ्चयितुं शक्नोति । स्वशक्त्यानुसारमेकभक्तं, नक्तं, चतुर्थकालिकमष्टमकालिकं वा भोजनं कुर्यात् । चान्द्रायणव्रतानुसारं भोजनं कुर्यात् अथवा पौर्णमास्याममावास्यायां वा वारमेकं यवागुं भक्षयेत्[२३]। विषयेऽस्मिन् आपस्तम्बेन विशेषेणोक्तं यत् वानप्रस्थी किञ्चित्कालभक्ष्यम्, ततो वायुभक्ष:,तत: आकाशमाश्रयेत्[२४], न किञ्चित् भक्षयेद्वा । यथोक्तमस्ति- ततोऽपोवायुमाकाशमित्यभिनिश्चयेत् । अनेन प्रकारेण वानप्रस्थाश्रमस्य नित्यभोजनव्यवस्था: विचारिता: सन्ति ।

सन्यासाश्रमस्य नित्यभोजनव्यवस्थां विचार्यते यथा- सर्वेषां धर्मशास्त्रकाराणामयमभिप्रायो यत्





सन्यासी स्वयात्रामात्रासिद्ध्यर्थमेव भिक्षार्थं ग्राममाश्रयेत् । तत्र गृहस्थानां भोजनादीनामन्ते सन्यासी भिक्षां याचेत्, न तु तत: पूर्वमिति मनुयाज्ञवल्क्यादीनामभिप्रायोऽस्ति[२५] । भिक्षाऽलाभे न विषादी भवेत्, लाभे च न हर्षयेत् । अभिपूजितलाभां भिक्षां वर्जयेत्। दिवसे एककालं भैक्ष्यं, प्रशक्तौ भूत्वा विषयासक्त: भवति । यथोक्तं मनुना-

एककालं चरेद्भैक्षं न प्रसज्जेत् विस्तरे ।

भैक्ष्यं प्रशक्तो हि यतिर्विषयेष्वऽपि सज्जति ।।[२६]

अपि च उत्पात्त- निमित्त- नक्षत्राङ्गादिविषयेषु उपदेशादिकं दत्त्वा भिक्षालाभार्थं नेच्छेत्[२७] । यथा वानप्रस्थिन: कृते भोज्यद्रव्यसंचयस्य व्यवस्था अस्ति तथा सन्यासिन: नास्ति । अनेन प्रकारेण चतुर्षु आश्रमेषु नित्यभोजनव्यवस्था: भिन्नाभिन्नरुपेण वर्णिता: । एतेषां भोजनकाले ग्रासपरिमाणं तु कति स्यादिति शंकायामुच्यते संन्यासी अष्टौ ग्रासान्, वानप्रस्थी षोडशग्रासान् ,गृहस्थ: द्वात्रिंशत् ग्रासान् तथा ब्रह्मचारी अपरिमितग्रासान् च भुञ्जीरन् । यथोक्तमस्ति- बौधायनापस्तम्बधर्मसूत्रयो:-

अष्टौ ग्रासा मुनेर्भैक्ष्या: षोडशारण्यवासिन: ।

द्वात्रिंशतं गृहस्थस्याऽपरिमितं ब्रह्मचारिण: ।।[२८] इति

अन्ते एतद्वक्तुं शक्यते यत् अस्माकं भोजनं शाकाहारी भवेत्, न तु मांसाहारी। मनुष्य: पूर्णरुपेण शाकाहारी प्राणीति वैज्ञानिका: वदन्ति । भक्ष्याभक्ष्यादिविषयेषु यत्र कुत्रापि मांसाहारस्य व्यवस्था विद्यते, सा तु नैमित्तिकभोजनरुपेण न तु नित्यभोजनरुपेण । नित्यमांसाहारेण मनुष्यस्य पाकतन्त्रक्रिया शनै: शनै: नष्टा भवति, येन महती हानिर्भवति । मांसाहारेण क्वचित् खाद्यविशृङ्खलाहेतो: भूताणुसंक्रमणेन जीवनहानिरपि भवति । यथा २०१०-२०११ तमे वर्षे शूकरमांसभक्षणेन स्वाईन् फ्लु भूताणुसंक्रमणेन चाईनादिषु पाश्चात्यराष्ट्रेषु सहस्राणि जना: दिवंगता: । २०१३-१४ तमे वर्षे वागुदमांसेन इबोला भूताणु संक्रमणेन पाश्चात्यराष्ट्रेषु सहस्राणि जना: दिवंगता: आसन् । कदाचित् बार्ड फ्लु संक्रमितानि कुक्कुट्यादिपक्षिमांसाणि अपि जनानां प्राणनाशस्य कारणानि भवन्ति । अधुना २०१९-२०२० तमे वर्षेऽपि अभक्ष्यमांसभोजनेन कोरना वाईरस् संक्रमणेन सर्वत्र बहव: जना: ग्रस्ता: दिंवगता:चेति अनुमीयते । एतदर्थमस्माकं भोजनं तु तथा शाकाहारियुक्तं सात्त्विकं च भवेत् येन कायमनोवाक् तु सात्त्विकानि भवेयु: । एतदृष्ट्वा केनापि महापुरुषेणोक्तमासीत्-

आहारशुद्धौ सत्त्वशुद्धि: इति ।।

पादट्टिपणी-

१.म.स्मृ.१.८-१०,म.स्मृ.१.११८-११९

२.म.स्मृ.२.४९

३.या.स्मृ.१.३०

४.गौ.ध.सू.१.२.४२
५.बौ.ध.सू.१.१.३.१७-१८
६.आ.ध.सू.१.१.२८-३०
७.म.स्मृ.२.५२
८.म.स्मृ.२.५२-५३
९.म.स्मृ.२.५७
१०.म.स्मृ.२.६२
११.म.स्मृ.३.७०
१२.या.स्मृ.१.१०२
१३.या.स्मृ.१.१०४
१४.बौ.ध.सू.२.७.१३.२
१५.म.स्मृ.३.७२,या.स्मृ.१.१०५,गौ.ध.सू.१.५.२३
१६.म.स्मृ.३.७८
१७.या.स्मृ.२.५५
१८.म.स्मृ.६.२७-२८
१९.म.स्मृ.६-१२
२०.आ.ध.सू.२.९.२२.३
२१.म.स्मृ.६.२१,गौ.ध.सू.१.३.१९
२२.म.स्मृ.६.१७
२४.आ.ध.सू.२.९.२२.४
२५.म.स्मृ..६.५६,या.स्मृ.३.५९,
२६.म.स्मृ.६.५५
२७.म.स्मृ.६.५०
२८.बौ.ध.सू.२.७.१३.८,आ.ध.सू.२.४.१३

सहायकाचार्य
धर्मशास्त्रविभा
रा.सं.सं.(मा.वि),जयपुरपरिसर:,राजस्था

◆◆◆





## निम्बार्कदर्शने ईश्वरतत्त्वम्

डा. नवीनकुमारप्रधान:

यं शैवा: समुपासते शिव इति ब्रह्मेति वेदान्तिनो,.
बौद्धा: बुद्ध इति प्रमाणपटव: कर्त्तेति नैयायिका: ।
अर्हतनित्यथ जैनशासनरता: कर्मेति मीमांसका:
सोऽयं नो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरि: ।।[१]

दर्शनशब्दस्य व्युत्पत्तिपक्षद्वारा लभ्योऽर्थो भवति दृश्यते अनेन इति दर्शनम् । क: पदार्थ: द्रष्टव्योऽस्ति ? वस्तुन: सत्यभूत तात्त्विकं स्वरूपं किमस्ति ? वयं के स्म ? कुत: समायाता: स्म। सर्वतो दृश्यमानस्य जगत: उत्पत्ति: कथं जाता ? अस्य सृष्टे: किं कारणमस्ति ? जीवनं सुचारुरूपेण प्रचलेत् इति एतदर्थं शोभन: साधनमार्ग: कोऽस्ति ? संसारेऽस्मिन् अस्माभि: कानि कर्तव्यानि करणीयानि सन्ति ? इत्यादीनां प्रश्नानाम् उत्तरप्रदानमेव दर्शनस्य प्रमुखं लक्ष्यं भवति । दर्शनं 'शास्त्र' नाम्ना उच्यते । यथा शासनात् शंसनात् शास्त्रमित्यभिधीयते ।

भारतीयो दार्शनिक: आध्यात्मिक:, आधिभौतिक:, आधिदैविक: दु:खत्रयस्य कारणात् उद्विग्नो भूत्वा तस्य समूलोच्छेदकरणभावनया प्रेरितो भवति । तथा च स: आत्मन: सूक्ष्मविवेचन-शक्त्याधारेण साध्यस्य निश्चयं विधाय साधनमार्गस्य व्याख्यायां प्रवृत्तो भवति । एकैकस्य दर्शनस्य कर्तु: मार्ग: गन्तव्यं स्थानं च यथार्थतो विवेचितं निर्दिष्टं चास्ति । भारतीयदार्शनिकस्य दृष्टि: पाश्चात्यदार्शनिकापेक्षया अत्यधिकं व्यावहारिकी लोकोपकारिणी सुव्यवस्थिता सर्वाङ्गीणा च भवति ।

दर्शनशास्त्रस्य कृते वैदिकऋषीणां बहुमूल्यं महत्त्वपूर्णं च अवदानमस्ति । यथा परिवर्तन-शीलो ब्रह्माण्डे एकम् अपरिवर्तनशीलं तत्त्वं विद्यते । तथैव अस्मिन् पिण्डेऽपि एकस्य अपरिवर्तन-शीलस्य तत्त्वस्य सत्ता अस्ति । ब्रह्माण्डस्य नियामकसत्ता ब्रह्म वर्तते । पिण्डाण्डस्य च नियामक-सत्ता आत्मा वर्तते । प्राचीना: दार्शनिका: ब्रह्माण्डपिण्डाण्डयो: ऐक्यं सर्वतोभावेन स्वीकृत्य जीवात्मब्रह्मणोरैक्यं प्रतिपादितवन्त: आसन् । तस्य साक्षात्कारश्च अत्यावश्यको वर्तते । संसारस्य सकलेषु प्रियपदार्थेषु श्रेष्ठ: प्रियपदार्थो: आत्मा एवास्ति । अत एव करुणामयी श्रुति: उपदिशति-

''आत्मा वाऽरे द्रष्टव्य: श्रोतव्य: मन्तव्यो निदिध्यासितव्यश्च ।''[२]

भारतीयदर्शनस्य चरमोत्कर्ष: वेदान्तदर्शने उपलभ्यते । अस्य दर्शनस्य अपरं नाम 'उत्तमीमांसा' इत्यपि वर्तते । उपनिषदां सिद्धान्तानां विरोधपरिहारार्थं श्रीबादरायणव्यासेन वेदान्तदर्शनं विहितमस्ति । तेन प्रणीतानि सूत्राणि 'ब्रह्मसूत्र'नाम्ना उच्यन्ते । ब्रह्मसूत्राणि स्वल्पाक्षराणि सन्ति ।

अत एव भाष्यभावस्थितौ तेषाम् अर्थज्ञानं क्लिष्टं भवति । भाष्यकारेषु मतवैभिन्यमस्ति ।
'ब्रह्मसूत्र' इति ग्रन्थे कति सूत्राणि, कति अधिकरणानि च सन्ति इति विषयेऽपि मतभेदोऽस्ति ।

'ब्रह्मसूत्र'मिति ग्रन्थे चत्वारोऽध्यायाः सन्ति । तथा च प्रत्यध्यायं चत्वारः पादाः सन्ति
सूत्रकारः बादरायणो व्यासः मायावादं न मनुते स्म । तस्य मतम् आसीत् 'यद् ब्रह्मणि सत्यपि जी
वास्तविकः भवति । ब्रह्मणः आविर्भूतं जगदपि वास्तविकं भवति । ब्रह्मसूत्रस्य भाष्यकारा
मतानि द्विधा विभक्तुं शक्यन्ते - अद्वैतवादः ईश्वरवादश्च । अद्वैतवादे ब्रह्म निर्विशेष (निर्गुण) तत्त्वरूपे
मन्यते । तथा च ईश्वरवादे सविशेषः (सगुणः) ईश्वरः वेदान्तसूत्राणां भाष्यकाराणां विवरणम् उपस्थाप्य
।

(१) शङ्कराचार्यस्य समयः भवति ७०० ई. तस्य भाष्यं भवति शारीरिकभाष्यम् 'अद्वैतमतम्'
वर्तते । (२) भास्कराचार्यस्य समयः भवति १००० ई. तस्य भाष्यं भवति भास्करभाष्यं म
भवति 'भेदाभेदमतम्' । (३) रामानुजाचार्यस्य समयः भवति ११४० ई. तस्य भाष्यं भवति
'श्रीभाष्यम्' मतं भवति 'विशिष्टाद्वैतमतम्' । (४) मध्वाचार्यस्य समयः भवति १२३८ ई. । तस्य
भाष्यं भवति पूर्णप्रज्ञभाष्यम् । मतं भवति द्वैतमतम् । (५) निम्बार्काचार्यस्य समयः भवति १२५
ई. । तस्य भाष्यं भवति वेदान्तपारिजातः, मतं भवति द्वैताद्वैतमतम् । (६) श्रीकण्ठाचार्यस्य समय
भवति १२७० ई. । भाष्यं भवति शैवभाष्यम् । मतं भवति शैवविशिष्टद्वैतमतम् । (७
श्रीपतिआचार्यस्य समयः भवति १४०० ई. तस्य भाष्यं भवति श्रीकरभाष्यम् । मतं भवति
'वीरशैवविशिष्टाद्वैतमतम्' । (८) बल्लभाचार्यस्य समयः भवति १५०० ई. तस्य भाष्यं भवति
'अणुभाष्यम्', मतम् अस्ति यत् 'शुद्धाद्वैतमतम्' । (९) विज्ञानभिक्षुः आचार्यस्य समयः भवति
१६०० ई. तस्य भाष्यं भवति 'विज्ञानामृतभाष्यम्', मतमस्ति अविभागद्वैतमतम् । (१०
बलदेवाचार्यस्य समयः भवति १७२५ ई तस्य भाष्यं भवति गोविन्दभाष्यम् । मतं भवति
'अनित्यभेदाभेदमतम्'[१] ।

निम्बार्कमतम्— निम्बार्कमतस्य अपरं नाम द्वैताद्वैतमतमस्ति । द्वैताद्वैतमतस्य आद्यः आचार्यः
हंसनारायणः अस्ति । एषः हंसनारायणः राधाकृष्णयुगलमूर्त्तेः प्रतीक आसीत् । परम्पराक्रमे
आचार्यनिम्बार्कः द्वैताद्वैतमतस्य प्रतिष्ठापकः अभवत् । एतस्मिन् मते चिदचिद्भेदेन मतद्वयमङ्गीकृ
चित्तत्त्वं जीवो भवति । अचित्तत्त्वं चेतनरहिताः पदार्थाः भवन्ति । ईश्वरः सर्वशक्तिमान् अस्ति
अचित्तत्त्वं त्रिविधं तच्च प्राकृतम्, अप्राकृतं, कालः इति नामभिः ख्यातम् । तत्र प्राकृतं महत्तत्त्वादारभ्य
महाभूतपर्यन्तं प्रकृत्याः उत्पन्नं जगदित्युच्यते । अप्राकृतं प्रकृतिसम्बन्ध-रहितं परमात्मनः लोकं
इति कथ्यते । तदेव श्रुतिसिद्धं विष्णोः परमं पदं भवति । कालः भगवतः सूर्यस्य गत्या निर्धारित
समस्तजगतः परिणामजनकः अस्ति । स एव कालः नित्यः अखण्डः जगन्नियामकः परमात्मना





नियम्यो भवति । कार्यात्मना अनित्यः कारणात्मना नित्यः इति कथ्यते ।

निम्बार्कमते सगुणब्रह्मवादः अङ्गीकृतः अस्ति । परमात्मा अविद्या अस्मितादिप्राकृतदोष-रहितः । निखिलज्ञानशक्तिमान्, ऐश्वर्यादिगुणान्वितः जगज्जन्मावस्थितिलयकारणभूतः, सर्वप्राणीनां फलदाता विश्वाधारः अनन्तः सर्वनियन्ता परंब्रह्मपुरुषोत्तमः श्रीकृष्णपदवाच्यः ईश्वर इति कथ्यते ।

निम्बार्कमते भगवति अनन्या भक्तिः मोक्षोपायः अस्ति । ज्ञानकर्मसमुच्चयात् मोक्षः सम्भवति इति एते प्रतिपादयन्ति । भक्तः यदा भगवति मनसा । कर्मणा, वाचा च आत्मनं समर्पयति । तदा सः मुक्तिं प्राप्तुं योग्यो भवति । एतन्मये विदेहकैवल्यम् । क्रममुक्तिः वा अङ्गीकृता अस्ति ।

एतस्मिन् मते निम्बाकाचार्येण विरचिताः वेदान्तपारिजातसौरभं, दशश्लोकी, श्रीकृष्णस्तवराज, निम्बार्कतत्त्वप्रकाशकः, श्रुत्यन्तसुरद्रुमः, श्रुतिसिद्धान्तमञ्जरी, मध्वमुखमर्दनं, वेदान्ततत्त्वबोधः, वेदान्तसिद्धान्तप्रदीपादयः ग्रन्थाः अतीव महत्त्वपूर्णाः सन्ति । श्रीनिवासाचार्य-विरचितः वेदान्तकौस्तुभः, केशवभट्टविरचितः कौस्तुभप्रभा, गीतायाः तत्त्वप्रकाशिका, वेदस्तुतिः, क्रमदीपिकादयाः ग्रन्थाः । श्रीपुरुषोत्तमाचार्येण विरचिताः वेदान्तरत्नमञ्जूषा, दशश्लोक्याः व्याख्याश्चेति । एतत्सम्प्रदायस्य महत्त्वपूर्णाः ग्रन्थाः भवन्ति ।

संदर्भाः-

१- षडदर्शनसमुच्चयः (टीका)- पृ.३०१

२- बृहद्.आ.उप.२१४/८

३- भारतीय संस्कृतिः-पृ.३३७

साहित्याध्यापकः
केन्द्रिसंस्कृतविश्वविद्यलयः
श्रीसदाशिवपरिसरः, पुरी, ओडिशा



# स्मृतिपुराणागमानुसारं गुरोः महत्वानुशीलनम्

डॉ.कृष्णचन्द्रकविः

**अखण्डमण्डलाकारं व्याप्तं येन चराचरम्।**
**तत् पदं दर्शितं येन तस्मै श्रीगुरवे नमः।।**

भारतीयसंस्कृतौ परम्परायां गुरोः महिमा सृष्टेरारम्भकालतः वर्तते। गुरुह्येव मानवानामज्ञानरूपान्धकारं ज्ञानाञ्जनशलाकया प्रज्ञाचक्षुरुन्मिलनपूर्वकं नाशयति इहलौकिकपारलौकिककर्मणि तस्य सामर्थ्यं च विकासयति।गुरुणा विना न कोऽपि जनः कर्मणि कुशलः भवितुं नार्हति। यस्य कस्यापि कार्यस्यादौ गुरोः निदेशेन कार्यं कर्त्तव्यमिति अस्माकं भारतीयानामस्ति सदा भावना । अतः गुरोः महत्वं मानवसमाजे सर्वतोपरि वरीवर्तते। गुरुशब्दस्यानेकेपारिभाषिकशब्दाः वर्तन्ते यथा गुरु आचार्य उपाध्यायः शिक्षक इत्यादयः। प्राचीनसाहित्यास्यालोचनायां सुस्पष्टं प्रतिभाति यत् आध्यात्मिकसाधनक्षेत्रे गुरोः शरणमपरिहार्यम्। दीक्षाग्रहणं विना आध्यात्मिकसाधना अपूर्णा स्यादिति प्राचीनशास्त्रकाराणां मतम्। अस्माद्धेतौ कुलार्णवतन्त्रे प्रोक्तमस्ति -**तस्मात् सर्वप्रयत्नेन गुरुणा दीक्षितो भवेत्।** (कु० त० १४) श्रीमद्भागवतमहापुराणकारोऽपि प्रवृष्टमानवस्य निर्मातुः गुरोः महिमानमङ्गीकृत्योल्लिखति श्रेष्ठज्ञानोपलब्धये शब्दब्रह्मणि निष्णातस्य सदगुरोः समक्षं गत्वा तत्र अस्य जगतः उपादाननिमित्तकारणभूतस्येश्वरस्य धर्मान् अवश्यमेव शिक्षेत।

**तस्माद् गुरं प्रपद्येत जिज्ञासुः श्रेय उत्तमम्।**
**शाब्देपरे च निष्णातं ब्रह्मण्युपशमाश्रयम्।।**
**तत्र भागवतान् धर्मान् शिक्षेत् गुर्वात्मदैवतः।।श्रीमद्भा ११/३/२१-२२**

एवं मुण्डकोपनिषद्यपि स्पष्टमुल्लेखो दृश्यते ब्रह्मज्ञगुरुणा संयतेन्द्रियाय प्रशान्तचित्ताय सर्वदा समीपमागताय शिष्याय तत्त्वोपदेशः कर्त्तव्य इति।

**तस्मै सः विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्तवताय।**
**येनाक्षरं पुरुषवेदसत्यं प्रोवाच तां तत्वतो ब्रह्मविद्याम्।।**

**मुण्डकोपनिषद् १/२/१३**

एवं भूतमहत्वशालिनः गुरोः महत्वमर्थं च व्याकरणनिरुक्तिदिशा मयात्र प्रतिपाद्यते। वैयाकरणाः अस्य शब्दस्य निष्पत्तिः गृशब्दे (गृणाति)गृ निगरणे (गिरति/गिळति )इति धातौ उ प्रत्यये कृते भवतीति प्रतिपादयन्ति। **गृ शब्दे गृणाति उपदिशति तत्वं वेदादिशास्त्राणि आत्मज्ञानसाधनानि वा इति गुरुः** अर्थात् येन आत्मज्ञानसाधकानि वैदिकतत्वानि धर्मज्ञानप्रतिपादकोपदेशाश्च दीयते स गुरुपदवाच्यः। अस्य शब्दस्यापरः





अर्थः अधोलिखितरूपेण प्रतिपादितो भवति । **गृ सेचने** । गिरति सिञ्चति ज्ञानवारिणा शिष्यहृदयक्षेत्रं योऽसौ गुरुः अर्थात् ज्ञानरूपकवारिणा शिष्यस्य हृदयररूपं क्षेत्रं सिञ्चति। **गृ निगरणे** गिरति गिलति अज्ञानम् अर्थात् यः अज्ञानरूपान्धकारं गिलति सः गुरुपदवाच्यः ।

**गुरी उद्यमने** । गुरुते सत्पथिप्रवर्तयति शिष्यमिति गुरुः शिष्यं सदा सर्वदा सत्पथि प्रेरयति यः सः गुरुपद वाच्यः । **गीर्यते स्तूयते देवगन्धर्वमनुष्यादिभिः । गीर्यते स्तुयते महत्वादिति** वा अर्थात् देवगन्धर्वमनुष्यादयो यं स्तुन्वन्ति असौ गुरुपदवाच्यः। अस्य धातोः प्राधान्येन ज्ञानप्रदानमुपदेशप्रदानं वेत्यर्थो जायते। यस्य विस्तृतरूपेणालोचनायां गुरुशब्दः सामान्यरूपेण शिक्षकमेव बोधयति। आङ्गलभाषायां (टिचर) इति शब्दोच्चार्यतेऽस्माभिः तत्तु संस्कृतभाषायां व्यवहृतगुरुशब्दस्य सम्भवतः क्रमविकासः इति मन्यन्ते विपश्चितः पश्चिमाः। आचार्यस्य पाणिनेः मतानुसारं गुरुशब्दस्य स्थाने गरीयस् गरिष्ठः गरिमन् इत्यादिशब्दानां प्रयोगे च एषा सम्भावना किंचित् बलवती जायते। परं व्याकरणदिशा गुरुशब्दस्यार्थचिन्तनेन तस्य महत्वं रहस्यमपि सम्यक् प्रतिपादितो नस्यादतोस्य रहस्यात्मकतथ्यं महिमानं च ज्ञातुं गुरुपदस्य रसास्वादनाय तन्महिमप्रकाशकानां शास्त्राणामालोडनमस्माभिः अवश्यमेव करणीयम्। गुरोः महत्वं अद्वयतारकोपनिषदि एवं प्रोक्तमस्ति-

**गुशब्दस्त्वन्धकारो स्यात् रुशब्दस्तन्निरोधके ।**
**अन्धकारनिरोधित्वात् गुरुरित्यभिधीयते।।**गुरुगीता १

अर्थात् गु नाम अन्धकारः रुकारः स्तस्य निरोधकोऽस्ति अतः गुरुः शिष्यस्याज्ञानरूपान्धकारस्य नाशकोऽस्ति।

तन्त्रसारे अस्य महत्वमेवमुक्तमस्ति।

**गकारः सिद्धिदः प्रोक्तो रेफः पापस्य हारकः।**
**उकारविष्णुरव्यक्तस्त्रितयात्मा गुरुः परः।**।तन्त्रसारः

गकारः सिद्धिदायको रेफस्तु पापहारकः उकारश्च अव्यक्तविष्णुरस्ति। एभिः त्रिभिः निर्मितस्य गुरुपदस्यार्थो परमगुरुं बोधयति। गुरुगीतायामेवं प्रकारेण कथितमस्ति गुकारः अन्धकारस्य वाचकः रुकारः तेजः इति उच्यते । अतो अन्धकारग्रासको ब्रह्मगुरुरेवास्ति । अपरं च गुकारः मायादीनां प्रकाशकः परं रुकारस्तु माया भ्रान्तिविनाशकोऽस्ति अतः गुरुः सर्वथा सांसारिकमायायाः नाशकोऽस्ति।

**गुकारस्त्वन्धकारश्च रुकारस्तेज उच्यते।**
**अज्ञानग्रासकं ब्रह्म गुरुरेव न शंसयः।।**
**गुकारः प्रथमो वर्णमायादिगुणभासकः।**
**रुकारो द्वितीयो ब्रह्म माया भ्रान्ति विनाशनम्।।** गुरुगीता २३-२४

एवं प्रकारेण गुरुशब्दस्यापरं निर्वचनमप्यस्ति यस्यार्थो भवति ब्रह्मज्ञानम्-

गुकार: सदिति प्रोक्तो रुकारज्ञानवाचक:।

ब्रह्मज्ञानैकरूपत्वात् गुरुरित्यभिधीयते।।

तान्त्रिकग्रन्थागमसारे गुरुशब्दस्य निर्वचनमेवमधोलिखितरूपेण कृतमस्ति। तत्र व्यञ्जनवकार: रकार: स्व उकारश्च एवं प्रकारेण गुरुशब्दं त्रिधावर्गीकररणं कृत्वा ग आध्यात्मिकसिद्धि: र पापविनाशक: उकार शिवस्य द्योतक: इति प्रतिपादितोऽस्ति। अस्य मतानुसारं गुरु: शिष्यस्य पापान् प्रक्षालयति आध्यात्मिकसफलता ददाति।

**गकार: सिद्धिद: प्रोक्तो रेफपापस्य दाहक:।**

**उकार: शम्भुरित्युक्त: स्त्रितयात्मा गुरु: स्मृत:।।**

**गकारज्ञानसम्पत्ति: रेफस्तत्वप्रकाशक:।**

**उकारच्छिवतादात्म्य दद्यादिति गुरुस्मृत:।। वाचस्पत्ये आगमसारवचनम्।**

गुरो भेदा:

अनेकेषु शास्त्रेषु गुरो: महत्वं बहुश: प्रतिपादितमस्ति। मनुना गुरो: त्रिधावर्गीकरणं कृतं तद्यथा आचार्य उपाध्याय: गुरु:। तत्र तेषां लक्षणमधोलिखितरूपेण प्रतिपादितमास्ति ।

**उपनीय तु य: शिष्यं वेदमध्यापयेत् द्विज:।**

**सकल्पं सरहस्यं च तमाचार्य: प्रचक्षते।।**

**एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुन:।**

**योऽध्यापयति वृत्यर्थमुपाध्याय: स उच्यते।।**

**निषेकादिनि कर्माणि य: करोति यथा विधि:।**

**सम्भावयति चान्नेन स विप्रो गुरुरुच्यते। मनु २/१४०-४२**

कुलार्णवतन्त्रे प्रेरकसूचकवाचकदर्शकशिक्षकबोधकरूपेण गुरो: षड्भेदा: प्रदर्शिता:। एतेषां निदर्शनमित्थं त अवलोक्यते।

**प्रेरकसूचकश्चैव वाचको दर्शकस्तथा।**

**शिक्षकबोधकश्चैव षडैते गुरव: स्मृता:।।**

अन्यतन्त्रग्रन्थेषु गुरो: द्वौ भेदौ कृतौ स्त: तत्र प्रथम: दीक्षागुरु: अपरस्तु शिक्षागुरु:। साधनादिव्यापारेषु दीक्षागुरु शास्त्राध्ययनार्थं च शिक्षागुरो: ग्रहणं कर्त्तव्यमिति तत्र प्रतिपादितमस्ति।

**गुरुस्तु द्विविधो प्रोक्तो दीक्षा शिक्षा प्रभेदत:।**

**आदौ दीक्षागुरुप्रोक्तो शेषे शिक्षागुरुर्मत:।।पि०तन्त्र १२/२**





**गुरुदेव:**

**गुरुर्ब्रह्मा गुरुर्विष्णु गुरुर्देव महेश्वर:।**

**गुरु: साक्षात् परं ब्रह्म तस्मै श्रीगुरवे नम:।।गुरुगीता**

आध्यात्मिकदृष्ट्या गुरो: रहस्यज्ञानस्यातीवमहत्वपूर्णपक्षमिदमस्ति यद् शिष्य: गुरुं न केवलं मानवरूपेण गणयति अपि तु तं ब्रह्माविष्णुमहेशरूपेण कलयति गुरु: आत्मन: कृते भगवत अवतार इति चिन्तयति च। शिष्येण गुरो: पार्थिवशरीरं न केवलं शरीरमपितु ईष्टदेवस्य मुर्त्तिमान् रूपमिति चिन्तनीयम्। गुरुं प्रति असाधारणप्रेमश्रद्धां विना साधक: स्वकीयाध्यात्मिकप्रगतौ सफलं न स्यात्। प्राचीनग्रन्थेपु विषयेऽस्मिन् बहुबलं दत्तमस्ति। तत्त्वस्यास्य प्रथमप्रकाशक: श्वेताश्वेतरोपनिषद् गुरो: देवत्वविषये अस्पष्टरूपेण प्रतिपादयति । ब्रह्मज्ञानस्योपरि तथ्यात्मकरूपेण पर्यालोचनं विधाय आध्यात्मिकदिशि सफलता प्राप्तये ईश्वरं तथा गुरुं प्रति प्रेमश्रद्धासमर्पणभावस्य प्रदर्शनं नितान्तप्रयोजनमिति प्रतिपादयन् उद्घोषयति यत् स ह्येव मानव: अस्मिन् प्रतिपादितध्रुवसत्यस्यावबोधनाय समर्थो स्यात् यस्य खलु ईश्वरे अपरिमितश्रद्धाविश्वास: तथा पराकाष्टा च विद्यते एवं च यथा देवे तथा गुरावपि यस्य अप्रमेयश्रद्धास्ति तस्मै अस्या: विद्याया: प्रदानेन ज्ञानस्य परिपूर्णप्रकाश: जायते।

यस्य देवे पराभक्ति: यथा देवे तथा गुरौ।

तस्मै ते कथिता ह्यर्था: प्रकाशन्ते महात्मन:।।श्वेता० उपनिषत्६/१३

गुरुं देवेति मन्यमानाय शिष्यायैव अस्या: विद्याया: उपदेश: कर्त्तव्य इति अपरैकमन्त्रे अत्र प्रतिपादितमस्ति।

वेदान्ते परमं गुह्यं पुराकल्पे प्रचोदितम्।

नाप्रशान्ताय दातव्यं नापुत्राय शिष्याय वा।।श्वेता० उपनिषद् ६/२२

अष्टादशपुराणेषु तान्त्रिकग्रन्थेष्वपि गुरुशिष्ययो: सम्बन्धविषये व्यापकरूपेण चर्चाकृतास्ति। मुण्डमालातन्त्रे गुरो: महिमानं प्रतिपादयन् प्रोक्तोऽस्ति यत् सम्पूर्णं विश्वं गुरुमयं सह्येव शिव: सर्वार्थसाधक: परमतत्वमिति।

गुरुरेकशिव: साक्षात् गुरुसर्वार्थसाधक:।

गुरुरेवपरं तत्वं सर्वं गुरुमयं जगत्।।

महर्षिवाल्मीके: मतानुसारं स्वर्गधनधान्यविद्यापुत्रपौत्रादिसुखानि गुरुवृत्यनुरोधेन किमपि दुर्लभं नास्ति।

**स्वर्गो धनं वा धान्यं वा विद्या: पुत्रा: सुखानि च।**

**गुरुवृत्यनुरोधेन न किञ्चिदपि दुर्लभम्।। वा०रा०२/३०/३७**

महाभारतस्याश्वमेधिकपर्वणि प्रोक्तमस्ति यत् उपाध्यायाचार्येभ्योऽपि ज्ञानदो गुरु: गरीयान् यतो ह्येष शिष्यस्य त्रितापनाशाय सर्वदा प्रयतते। अतो गुरुमतिरिच्य इहावनीतले सर्वविधैश्वर्यप्रदाता कोप्यन्यो नास्ति। गुरुषु ज्ञानदो गुरु: सर्वदा गरीयान् यतो अस्मात् कोऽपि श्रेष्ठतर: संसारे नास्ति न वा भविष्यति।

एतेषामपि सर्वेषां गरीयान् ज्ञानदो गुरुः।

गुरोः परतरं किञ्चिन्नभूतं न भविष्यति।। महा० भा० आश्वमेध० प०९२/५९

एवं ज्ञानगरिम्णालंकृतं मानवं वैदिकसाहित्यं तदुपवृंहणकानि पुराणानि वेदाङ्गानि च भूयोभूयो प्रशंस गुरोरन्तश्चेतनायामुपनिषदामनेकतथ्यपूर्णरहस्याः स्वत एव प्रतिपादिताः सन्ति इति उपनिषदः प्रतिपाद वाचस्पत्ये नित्यातन्त्रस्याधोलिखतं पद्यं गुरुदेवं सामान्यनररूपेणानस्वीकार्यमिति स्पष्टरूपेणोद्घोषयति। क जनः यदि गुरुं मानवरूपेण कल्पयति तर्हि तस्य मन्त्रजपः देवपूजनादिकं च व्यर्थ स्यात् एवं च सः क आध्यात्मिकसाधनायामाप्तकामो न भविष्यति इति दृढ़ोक्तिः प्रकाशितास्ति।

गुरुं न मर्त्यं ध्यायेत यदि बुद्धयेत तस्य तु।

न कदाचित् भवेत् सिद्धिः न मन्त्रैः देवपूजनैः।।

ललितासहस्रनाम्नि देव्या सह गुरोः तादात्म्यसम्बन्धः सम्यक् प्रतिपादितः। अस्मिन् गुरोः महत्त्वविषये वर्णनमुपलभ्यते तस्मात् ज्ञायते गुरुः जगन्मातुः देव्याः मानवशरीरधरिरूपोऽस्ति। अत्र भगवत्याः गुरुमण्डल इति अपरमेकं नाम किर्त्तितमस्ति। अस्मात् प्रतीतिः भवंति न केवलमस्माकं प्रत्यक्षीभूतस्य एकस्यैव गु तादात्म्यं भगवत्या सहास्ति अपि तु समग्रया गुरुपरम्परया सहास्ति तस्याः तादात्म्यसम्बन्धः। कस्य आचार्यस्य छन्दोबद्धमतं मयाधीतं तन्मयाधः प्रतिपाद्यते यस्यार्थो भवति यथा घटकलशकुम्भादिशब्दाः एक पदार्थस्यावबोधकाः तथैव गुरुदेवतामन्त्राः एते शब्दाः एकार्थवाचकाः तदुक्तं तेन-

यथा घटश्च कलशः कुम्भश्चैकार्थवाचकाः।

तथा मन्त्रो देवता च गुरुश्चैकार्थ वाचकाः।।

न केवलं विभिन्नशास्त्रादिषु गुरोः महत्वं देवैः तुल्यमिति प्रतिपादितमस्ति अपि विभिन्नसनातनधर्मसाम्प्रदायिकैराचार्यैः अपि स्वीकृतमस्ति। अद्वैतवेदान्तस्य दिग्गजेन जगद्गुरुणा आदिशङ्क गुरोः लक्षणं तस्य सहाभेदस्थापनं च एवं कृतम्। यः शिष्यस्याविद्यारूपी हृदयग्रान्थिमुद्घाटयति तमेव गु इत्याहुः अपि च शिव एव साक्षात् गुरुः गुरुः साक्षात् शिवरूपोऽस्ति अतः उभयोः मध्ये कोऽपि भेददृष्टिः कल्पयेत्।

अविद्या हृदयग्रन्थि विमोक्षोऽपि भवेद्यतः।

तमेव गुरुरित्याहु गुरुशब्दार्थभेदिनः।।

शिव एव गुरुः साक्षाद् गुरुरेव शिवः स्वयम्।

उभयोरन्तरं किञ्चिन्न द्रष्टव्यं मुमुक्षुभिः।। कल्याण नीतिसार अङ्कः १४६

भारतीयनीतिः देवतीर्थदैवज्ञभेषजगुरौ सर्वथा अभेदं कल्पयति। एतेषां प्रत्यक्षोपस्थितिः सर्वथा सुखमित्यनुस्मर साधकाः। एषु यस्य यथा चिन्ता वर्तते तस्य तथैव कार्यसिद्धिः भवति।

देवे तीर्थे द्विजे मन्त्रे दैवज्ञे भेषजे गुरौ।





यादृशी भावना यस्य सिद्धिर्भवति तादृशी।। सुक्तिसुधाकरः

मानवः उग्रतपोभिः स्वकीयसाध्यं साधयति अमृततत्त्वं च लभते। इह जगति तले साधनं विना सिद्धिः कदापि न स्यात्। गुरुशिष्ययोः मध्ये साध्यः गुरुः शिष्यस्तु साधकः एवं च गुरुः देवः शिष्यस्तु उपासकः। गुरोः महत्वं प्रतिपादकेषु ग्रन्थेषु गुरवः पञ्चाग्निरूपेणापि कल्पिताः सन्ति।

पञ्चाग्नयो मनुष्येण परिचर्या प्रयत्नतः।

पितामाताऽग्निरात्मा च गुरुश्च भरतर्षभः।।

एवं प्रकारेण श्रुतिस्मृतिपुराणतन्त्रागमग्रन्थेषु गुरोः देवत्वविषये व्यापकरूपेण चर्चा कृतास्ति। अनेकेषु उपनिषत्सु गुरुशिष्ययोः नैकाः गाथाः उपलभ्यन्ते यासामध्ययनेन ज्ञायते सद्गुरोः समीपे आत्मनिवेदनेन शरणागतिमाध्यमेन च आध्यात्मिकज्ञानस्योपलब्धिः जायते। वेदोपनिषद्काले श्वेतकेतुनचिकेतामैत्रेयीप्रभृतीनां सत्यनिष्ठापरायणानां शमदमशौचस्वाध्याययुक्तानां शिष्याणां यत् किञ्चित् आध्यात्मिकसुखम् ईश्वरदर्शनादीन्यलौकिकसुखानि च जातानि तत् सर्वं सद्गुरोः समीपं गत्वा तेषामाज्ञानुसारं सेवामाध्यमेनाभवत्। दिव्यशक्तिसम्पन्नाः गुरवः केवलं स्वकीयदयाशिषबलेन आरुणि उपमन्युसदृशान् शिष्यान् निगमान्तविद्यायाः अधिकारी अकारयन्। अतो आधुनिकैरपि अस्माभिः समाजे गुरोः पदमर्यादा अवश्यमेव पालनीया सम्माननीया च।

**गुरुः दुखापहर्त्ता**

जीवः कर्मानुगः आत्मनः शुभाशुभकर्मणः फलंभुङ्क्त्वा बहुजन्मनः पुण्यसंचयात् कदाचित् मानुषं जन्म लभते। पुण्येऽस्मिन् मानवशरीरेऽपि यदि सः कुकर्मणि आसक्तो भविष्यति तर्हि पुनः दुःखयोनिं यास्यति इति भयात् सदसत् कर्मनिरूपणाय पुण्यसंचयाय च सद्गुरोः अन्वेषणं करोति। सद्गुरुरेव स्व शिष्याय परमतत्वोपलब्धये भवसागरोत्पन्नत्रितापशान्तये अपुनर्भवाय च पन्थानं दर्शयति। भवसागरोत्पन्नदुःखनिवृत्तिपूर्वकं शिष्याय परमसुखं ददाति अतो गुरुदुःखापहर्त्ता।

यथा ज्ञानविज्ञानं विना मोक्षः न सम्भवति तथैव सद्गुरुं विना ज्ञानप्राप्तिरपि न स्यात्। अस्य संसारसागरस्य प्लावयिता गुरुः तथा तेन प्रदत्तं ज्ञानं नौरिवास्ति। मानवः तद् ज्ञानं लब्ध्वा दुःखदावानलापरिपूर्णस्य संसारसागरस्य पारं गन्तुं समर्थो भवति। तदुक्तमस्ति महाभारते।

न विना ज्ञानविज्ञाने मोक्षस्याधिगमो भवेत्।

न विना गुरुसम्बन्धं ज्ञानस्याधिगमः स्मृतः।।

गुरुः प्लावयिता तस्य ज्ञानं प्लव इहोच्यते।

विज्ञाय कृतकृत्यस्तु तीर्णस्तदुभयं त्यजेत्।।महा०भा०शान्ति ३२६/२२-२३

गोस्वामितुलसीदासमहाभागाः गुरुः अज्ञानरूपकस्य मोहान्धकारस्य नाशाय सूर्यः नररूपहरिः इति स्वीकुर्वन्ति स्वीय रामचरितमानसे-

वन्दउँ गुरुपदकञ्जकृपा सिन्धुनर रूपहरि।
महामोह तम पुँज जासु वचन रविकर निकर।।

एवमपि गुरुगीतायां गुरुदेव: ब्रह्मानन्दरूपपरमसुखदाता सर्वज्ञानमय: सुखदु:खद्वन्दरहित इति प्रतिपादितो

ब्रह्मानन्दं परमसुखदं केवलं ज्ञानमूर्त्तिम्।
द्वन्दातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम्।।
एकं नित्यं विमलमचलं सर्वधी: साक्षिभूतम्।
भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि।।गुरुगीता ८९

सर्वशास्त्राणामालोडनेन प्रतिभाति सुखं तु ज्ञानाधीनमेव ज्ञानमपि सद्गुरोरधीनमतो गुरुमाध्यमेन ज्ञाना तस्मात् दु:खस्य नाश: जायते। तस्मात् गुरुदु:खापहर्त्ता इति वक्तुं पार्यते।

**पित्रषिकं गुरु:**

अस्माकं संस्कृतौ परम्परायां च पञ्चपितर: इति आध्यात्मिकभावनया मन्यन्ते। ते पितर: यथा जन्मदाता उपनेता विद्यादाता अन्नदाता भयत्राता च।

जनिता चोपनेता च यस्तु विद्यां प्रयच्छति।
अन्नदाता भयत्राता पञ्चैते पितर: स्मृता: ।। चाणक्यनीति:

एषु विद्यादाता गुरु: सदा सर्वत्र गरीयान् अस्ति। स्मृतिकारेण मनुना श्रीगुरो: पितृत्वविषये एवं स्वकीयं मतमुपन्यस्तम् तद्यथा -

**य आवृणोत्यवितथं ब्रह्मणा श्रवणावुभौ।**
**स माता स पिता ज्ञेय: स्तं न द्रुह्येत् कदाचन।।मनु २/१४४**

तथा च तत्रेव जन्मदातु: सकाशात् ब्रह्मदाता गुरु: श्रेयस्कर: इति प्रतिपादित:।

**उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मद: पिता।**
**ब्रह्म जन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम्।। मनु२/१४६**

यतो हि जन्मदातृणा निर्मितं शरीरं कदाचित् नाशमेष्यति परं वेदज्ञानेन समुत्पन्नस्य शरीरस्य कदापि नाशो न भवति ततु अजरम् अमरं च।

**शरीरमेतौ सृजत: पिता माता च भारत।**
**आचार्यशास्ता या याति: सा सत्या साजरामरा।। महा भा अनु १०५/१८**

अतिथि- अध्याप
पुराणेतिहासविभा
केन्द्रीयसंस्कृतविश्वविद्याल
श्रीसदाशिवपरिसर:,पुरी, उत्कल

◆◆◆





## साम्प्रतिककाले आसनस्य उपयोगिता

डॉ.सुकान्तिवारिक्

अस्माकं भारतीयषडास्तिकदर्शनेषुमहर्षिपतञ्जलिप्रणीतं योगदर्शनम् अतिमुख्यतां भजते। ईश्वर-प्रतिपादकत्वात् सेश्वरसांख्यत्वेन प्रशस्यते। निर्बीजसमाधिरेवअत्रमोक्षत्वेन आख्यायते।

सर्वेषुपुराणेषु पुराणलक्षणभूतयो: सृष्टिप्रलयो: निरूपसमये आत्मनात्मविवेक निरूपणसमये च सांख्ययोगदर्शनयो: प्रभाव: दृश्यते। तत्रबहुषुआलोचितविषयेषु योगदर्शने प्रतिपादितआसन् इत्यस्मिन् आलोचनावसरे उच्यते यत्, यमनियमासनाभ्भासानन्तरम् आचरणीय: आसनोभवति।

सर्वेषुदर्शनेषुअद्वैतवेदान्तमतेउक्तमस्ति- करचरणाद्धि संस्थानविशेष लक्षणानिपद्मस्वस्तिकादिनीआसनानि। प्रकृतपक्षेशरीर: सुस्थ: भवति चेत्मन: अपिसुस्थ: भवति। आयुर्वेदे यदुक्तम शरीरं व्याधि मन्दिरम्। आसनानिकरणै: सर्वैसुस्वास्थंप्राप्तुम् शक्यते। आसनानि यथा-पद्मासनंवीरासनंभद्रासनंस्वस्तिकासनंदण्डासनं श्च। अधुना विद्यालये विविधआसनानि आवश्यक करणेप्रचलति। विश्वविद्यालयेऽपि योग: इतिविषयमधिकृत्य आचार्यविद्यावारिधिडिग्रींप्राप्तुं शक्यते। इदानींरामदेववावा योगासनोपरि विश्वख्याति अर्जितवान्, तेषांरचित: पुस्तकानिपठित्वाविविध रोगशालायां गत्वाअधिकांशदेशवासीन: उपकृतंभवन्ति।

अधुनिकयुगे विज्ञानमययुगे एतस्य गुरूत्वंअधिकंनास्तिएव।

योग: शब्द: युजिर् योगे इत्यस्मान् रूधादिगणसस्थाद्धातो: दिवादिगणस्थात् युज समाधौ इत्यसस्माद् वानिष्पन्न:। तस्य च संयोग: मेलनंसमाधि: इत्यादयो: अर्था:। साम्प्रतिकयुगे नैकयोगा: अनुगम्यन्ते। यथा-

मन्त्रो लयो हठो राजयोगान्ता भूमिका: क्रमात्।
एक व चतिर्धाऽयं महायोगोऽभिधीयते।।

मन्त्रयोग: क्रियायोग: हठयोग: राजयोग: ज्ञानयोग: भक्तियोग: तन्त्रयोगश्चेति।

मन्दाधिकारिणं योगशास्त्रे आरूरूक्षव: इति व्यपदेशोऽस्ति। तेषां ज्ञानसाधनाय योगशास्त्रे अष्टाङ्गयोगो विहिता:। अयमष्टाङ्गयोग: उत्तमाधिकारिणांविहिते अभ्यासवैराग्ये, मध्यमाधिकारिणां विहितंतप: स्वाध्यायेश्वरप्रणियानरूपक्रिया योगं च पिपण्डीकृत्य मन्दाधिकारिभ्यो विहित: दृश्यते। दु:ककारणमविद्या। सा च हेयो भवति। सा च पञ्चपर्वणोहिअशुद्धिरूपा। तसस्या: निवारणोपाय: विवेकख्याति:। अष्टाङ्गयोगस्य अनुष्ठानात्अशुद्धिक्षय: भवति। यथा यथासाधनानि अनुष्ठीयन्ते तथातथाअशुद्धि: क्षीयते। यथा यथाअशुद्धि क्षीयतेतदा तदातदातत् क्षयक्रमानुसारोधिनो ज्ञानस्यापि दिप्तीर्भवतिवर्धते च। साखलु एषाविवृद्धि: प्रकर्षत्वंप्राप्नोति विवेकख्यातिपर्यन्तम्। गुणानांपुरुषस्य स्वरूपविज्ञानात् इत्यर्थ:। अत: योगाङ्गानुष्ठानम् अशुद्धे: वियोगकारणं भवति। अत्र दृष्टान्त: परशुच्छेद्यस्य। यथा परशु: छेद्यं बृक्षंमूलेन वियोजयति तथा योगाङ्गानुष्ठानं चित्तसत्वमशुद्ध्या वियुज्य विवेकख्यातिं प्रापयति। यथा धर्म: सुखकारिणंतथैव योगाङ्गानि विवेकख्यातिकारणानि भवन्ति[२]।

भगवान्पतञ्जलिमतानुसारेण योगाङ्गानि इत्यस्मिन् विषये योगसूत्रे उल्लिखितं यत्[३] यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि इति। योगाङ्गेषु तृतीयमङ्गम् आसनम् अत्रपतञ्जलि[४]- स्थिरसुखानम्इति। निश्चलं सुखावहं च शरीरः अवयवविन्यासविशेषः आसनंभवतिइत्यर्थः अयं शारीरिकंमानसिकं च स्थितिविशेषः। यादृशेन देहस्थापनेन यस्य पुरुषस्य अवयवव्यथानुत्पत्तिलक्ष सुखं देहचलनंराहित्यलक्षणं स्थैर्यं च सम्पद्यतेतदेव मुख्यतममासनम् इतित व्याख्यायां योगी सदाशिवब्रह्मेन्द्र[५] आसनसंख्याविषये तु उक्तं दृश्यते। तद्यथा[६]- आसनानि च तावन्ति यावन्तो जीवराशयः इति। आसनसंख्या यावन्तः जीवकोटयः भूविसन्तितावन्तः इति संख्याबाहुल्यं प्रदर्शितम्।

तानिसर्वानिआसनानिईश्वरमात्रेण ज्ञातानि। मुख्यतमानि आसनानिइति व्यासभाष्ये एकादशासनानिनिर्दिष्टानिसन्ति। तानिपद्मासनं, वीरासनं, सस्वस्तिकं, दण्डासनं, सोपाश्रयं, पर्यङ्कम्, क्रोञ्चनिषदं, हस्तिनिषदनं, उष्ट्रनिषदनं, समसंस्थानं चेति। ग्रन्थान्तरेषुविभिन्नानिआसनानिप्रोक्तानि। संख्याविषये अपिमतभेदाः सन्ति। प्राणायमसौलभ्यार्थं तत्तत्देहप्रकृतिअनुसारेण अनुष्ठेयम् आसनमिति तात्पर्यं लक्ष्यते। हठयोगग्रन्थेषुरोगपरिहारफलकानिआसनानिसुप्रसिद्धानिसन्ति। तत्र योगसूत्रे आसनाभ्यासक्रममपि निर्दिष्टं ये आसनसिद्धिः भवेत्। तद्यथा[७]- प्रयत्नशैथिल्यानन्तसमपत्तिभ्याम् इति। स्थिरत्वसुखत्वप्रप्त्यर्थम अभ्यासः कथं करणीयमिति जिज्ञासया उक्तमिदंसूत्रम्। यदा आसनंबध्नातिइतिइच्छांकरोति प्रयत्नशैथिल्ये सतिअक्लेशेनैवतदाआसनंसम्पद्यते। यदा नन्ते चेतसः समापत्तिः क्रियते, अव्यवधानेन तादात्म्यम् आपद्यतेतदादेहाहंकारभावात्आसननंदुःखजनकंभवति। एवम्असनसिद्धिः भवतीति। एतादृशेन आसनाभ्यासे सुखदुःखादिवन्द्वैः नाभिहन्यते[८] साधकः।

उपनिषत्सुदशसुआसनविचारः नतावत् दृश्यते। किन्तुश्वेताश्वतरोपनिषदिआसनलक्षणं स्पष्टतया निरूपितमस्ति। यथा[९]-

**त्रिरून्नतं स्थाप्य समंशरीरं।**
**हृदीन्द्रियाणि मनसा सन्निरूध्य।**
**ब्रह्मडुपेनप्रतरेनविद्वान्स्त्रोतांसिसर्वानि।। इति।।**

आसनस्य स्वरूपंअत्रअभिहितम्। उरोग्रीवाशिरांसि त्रीणिउन्नतानित्रिरून्नतमितिप्रकीर्तितम्उपनिषदि। तान्उन्नतानि स्थाप्य एवंशरीरंसमं च स्थापयेत्। किञ्च हृदीन्द्रियाणि मनसा सन्नियम्य उपविशेत् इत्यर्थः। सर्वाणि भयावहनि स्त्रोतांसिनामसंसारअस्ति स एव भयावहः, तंब्रह्मरूपेण उडुपेनतरणसाधनेनतरेत् इत्यर्थः काकाक्षिवत् अयं प्रणवः ब्रह्मणितरणसाधने च सम्बध्यते इतिविशेषः। तदुक्तं भगवद्गीतायामपि[१०]-

**समं कायशिरो ग्रीवं धारयन्नचलं स्थिरः।**
**सम्प्रेक्ष्य नासिकाग्रंस्व दिशश्चानवलोयन्।। इति।।**

कायशरग्रिवांसिअत्र त्रीणिउन्नतानि । तानिसमं धारयनं प्राणायामं कुर्यादिति शेषः। अनेनशारीरिकस्थिरत्वेनमनसःअचलत्वं संसाध्यते। आसनविशेषाणांअन्तिमफलमेतत्। अनेन ध्यानाभ्यासो





चिरकालंस्थातुंभवति।

आसनम् अयं कथं करणीयम् इत्यस्मिन् विषये यत् गीताश्लोकौ[११]–

**शुचौदेशे प्रतिष्ठाप्य स्थिरसुखमासनमात्मनः।**
**नात्युच्छ्रितं नातिनीचं चौलाजिनकुशोत्तरम्।।**
**तत्रैकाग्रंमनः कृत्वा यतचित्तेन्द्रियक्रियः।**
**उपविश्याऽसने युञ्ज्याद्योगमात्माविशुद्धये ।।इति।**

शुचौस्वभावतःसंस्कारतोवाशुद्धौ जनसमुदायरहिते निर्भये गङ्गातटगुहादौ देशेसमेस्थाने प्रतिष्ठाय स्थितं निश्चेतं नात्युच्छ्रितं नात्युच्चं नाप्यतिनीचं चैलाजिनकुशोत्तरं चौलंमृदुवस्त्रम्, अजितंमृदु व्याघ्रदिचर्म ते कुशेभ्य उत्तरेउपरितने यंस्मिस्तत्, आस्यते अस्मिन्निति आसनं , कुसमयवृष्युपरि मृदुचर्मतदुपरिमृदुवस्त्ररूपमित्यर्थः । तथा च उच्यते भगवान्पतञ्जलिःस्थिरसुखमासनम्इति।

अस्यायमर्थः मणिप्रभानुसारेण– निश्चलं सुखावहं च यदासनं तद् योगङ्गमित्यर्थः । आस्ततेअनेनइतिआसनम्। तत्द्विविधंबाह्यंशरीरं च । तत्र चैलाजिनकुशोत्तरंबाह्यंशरीरंपद्मस्वस्तिकादीनिविशेषः।

आसनविषयको विचारः अद्वैतदृष्ट्या अपि अयमङ्गीकृतःवर्ततेब्रह्मसूत्रे चतुर्थाध्याये प्रथमपादगमासीनाधिकरणमत्रप्रमाणम्। यथा[१२]-

कर्माङ्गमसम्बद्धेषुतावदुपासनेषुकर्मतन्त्रत्वात्नआसनादिचिन्तानापि सम्यग्दर्शने वस्तुतन्त्रत्वात् विज्ञानस्य। इतरेषु तु उपासनेषु किमनियमेन निष्ठान्त्रसीनः शयानो वाप्रवर्ततेइति नियमेन आसीनएवेति चिन्तयति। तत्रमानसत्वातु उपासनस्यानियमः शरीरस्थितेःइति। एवंप्राप्तेब्रवीति-आसीनएवोपासीतेति। कुतः–सम्भावात्। उपासननंनाम समानप्रत्ययप्रवाहकरणं न च तत्देहधारणे व्यालपृतंमनोनसूक्ष्मवस्तुनिरीक्षणक्षमंभवति। शयानस्यापि अकस्मादेव निद्रायाभिभयेत। आसीनस्य तु एवं जातीयको भयात दोषःसुपरिहरइतिसम्भवित तस्योपासनम्।

"ध्यानाच्चह्न"[१३]

अपि च ध्यायत्यर्थ एष यत् समानप्रत्ययप्रवाहकरणम्। ध्यायतिश्च प्रशिथिलाङ्गचेष्टेषुप्रतिष्ठितदृष्टिषुएकविषयक्षिप्तचित्तेषु उपयर्यमाणो दृश्यते ध्यायति बको ध्यायति प्रोषतबन्धुरिति। आसीनः च नायासो भवति। तस्मात्अपिसनकर्मोपासनम्।

"अचलत्वं चोपेक्ष्य।ह्न"[१४]

अपि च ध्यायतीव पृथीवि१५ इत्यत् पृथीव्यादिषुअचलत्वमेव अपेक्ष्य ध्यायतिवादो भवति तच्च लिङ्गमुपासनस्य आसीनकर्मत्वो ।

"स्मरन्तिचि।"[१६]

स्मरन्त्य च शिष्टाउपासन अङ्गत्वेन आसनम्-शुचौदेशे प्रतिष्ठाप्य स्थिरमासनमात्मनः इत्यादिना अतःएवपद्मकादीनामासनविशेषणमुपदेशो योगशास्त्रे इति।

अस्मिन्विषये श्वेताश्वतरोपनिषदि प्रमाणम्[१७]-

**शमेशुचौशर्करावह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः।**
**मनोऽनुकूलेन तु चक्षुपीण्डेन गुहानिवाताश्रयेण प्रयोजयेत्।। इति।**

मानवजीवने आसनस्य किं प्रयोजनमस्ति इत्यस्मिन् विषये उच्यते यत् महर्षिपतञ्जलिना द्वन्दानभिघातत्वंइति। अर्थात्शीतोष्ण, सुखदुःख, मानवमानादयः नपीडयन्ति। तदेवसूत्रेणोक्तंमहर्षिणा[१८] **"ततोद्वन्दानाभिघातह्यइति।** स्वात्मारामेण आसनस्य प्रोयजनं हठयोगप्रदीपिकायाम् एवमुक्तम्। सुखदुःखमि मानवमानेत्यादि द्वन्दवैःमानवःसर्वथा च पिडितो भवति। सुखेषुविगतस्पृहत्वं, दुःखेष्वनुद्विग्नत्वंइति यदभिलषणीय तत्विरूद्धतया मानवःप्रवर्तते। एतेनकारणेनविवेकभ्रष्टः पौनपुन्येन द्वन्दवैनअभिहितःसन्सुखेषुविगतस्पृह दुःखेषुउदविग्नसन्जन्मान्तरेषुसंसरति। पतञ्जलिमहर्षिणा उपदिष्टस्य अन्यैः महर्षिभिः विस्तारितस्य आसनस्य अभ्यासेन शरीरे ततश्च मनसि च विद्यमानानि मालिन्यानि प्राप्नुवन्ति मालिन्येषुनष्टेषुसत्सुएवसुखदुःखादिद्विन्दवानुभवः नश्यति।

आसनाभ्यासेन मनसःएकाग्रता, प्राणततत्वस्य ऊर्ध्वगमनंबहुविधानांशारीरिकरोगाणां च निवृत्तिःभवति विभिन्नैःआसनैःविभिन्नाःपरिणामाःभवन्ति। साधकस्य प्रकृत्यनुकूलमासनं हितकरंभवति। स्वस्तिकासनमधिकृत्य इत्यम् अभिवर्णितं यत् श्रीमद्भागवतौ[१९]-

**शुचौदेशे प्रतिष्ठाप्य विजितासनआसनम्।**
**थस्मिन्स्वस्तिकंआसीनो ऋजुकायस्समभ्यसेत्।।इति।**

इतोऽपि स्वस्तिकासनस्य लक्षणविषये उच्यते यत्[२०]—

**जानुर्वोन्तरे सम्यक् कृत्वापादतलेउभे।**
**ऋजुकायः सुखासीनःस्वस्तिकंतत्प्रचक्षते।। इति।**

एतादृश स्वस्तिक-पद्माद्यासनाभ्यासेन सर्वप्रकारकंद्वन्दवंनिवृत्तंभवति। शीतोष्ण, रागद्वेषः, क्षुत्पिपासादयः योगसाधने बाधांन जनयन्ति। तदुक्तम्[२१]-

**पद्मासनादयः स्युश्चेत् सुनिश्चलसुखावहाः।**
**तथाभवति योगाङ्गं द्वन्दवाशातनाशनम्।। इति।**

एवमासनेनद्वन्दवनिवृत्तिःभवति। किं च आसनस्य मुख्यमुद्देश्यं ब्रह्मदण्डस्य उन्नतीकरणम्। यतो हि तस्य अभ्यन्तरे सुषुम्नानाडीवर्तते। आसन, ध्यानद्वारा मूलाधारेकुण्डलीनिप्रबुद्धा सती क्रमेणब्रह्मरन्ध्रमुपतिष्ठते। तत्रपरात्परेणब्रह्मणामिलित्वा लयं गच्छति। साधकश्च समाधिस्थोभवति। यदि साधनसमये ब्रह्मदण्डं बक्रंतिष्ठते, तर्हि क्रियासिद्धिः नसम्भवति। अतःआसनसिद्धेः आवश्यकत्वं दृश्यते।

**पादटीप्पणि**

१.यो.शि.-३/१२/१३१
२.पा.यो.सू.-१/२९
३.पा.यो.सू.- १/२८
४.पा.यो.सू.-२/४६





५.पा.यो. सू.-२/४६
६.घे.सं - ३/१
७.पा.यो.सू.- २/४७
८.पा.यो.सू-२/४८
९.श्वे.उ.- २/८
१०.श्री.भ.गी.-|
११.श्री.भ.गी.-६/११-१२
१२.ब्र.सू.४/१/७
१३.ब्र.सू.-४/१/८
१४.ब्र.सू.- ४/१/९
१५.छा.उ.- ७/६/१
१६.ब्र.सू.- ४/१/१०
१७.श्वे.उ.-२/१०
१८.पा.यो.सू.- २/४८
१९.श्री.भा.पु. - ३/२८/८
२०.सा.यो.द.वर्तिकम् पृ.२६७
२१.सा.यो.द.वर्तिकम् पृ.२६७

**सहायकग्रन्थसूची**

पातञ्जलयोगदर्शनम् –महर्षि व्यासदेव प्रणीत भाष्य एवंराजर्षिभोजदेवप्रणीत वृत्तिरहित, ईर्ष्टर्नबुकलिंकर्स, दिल्ली।
घेरडसंहिता - चौखम्बा-संस्कृत-प्रतिष्ठानम्, दिल्ली।
श्रीमद्भागवत्- वेदव्यासः, वाविल्लवेङ्कटेश्वर शास्त्रीएण्डसन्स् चेन्नपुरी, १९४१।
श्रीमद्भगवद्गीता- गीताप्रेस, गोरखपुरम्।
श्वेताश्वतरोपनिषद्–सम्पादकःसर्वानन्दःश्रीरामकृष्णमठ, मद्रास, १९८३
छान्दग्योपनिषद्- पट्टाभिरामशास्त्री, व्यासाश्रमः एर्पेडु, १९९१
ब्रह्मसूत्रभाष्यम् – डॉ. रामरमणत्रिपाठी, चौखम्बासंस्कृतसीरिज, पञ्चकसमीक्षणम्, अफिस्वाराणसी- १९७२
सांख्यकारिका –ईश्वरकृष्णः, व्यासप्रकाशन –वाराणसी, १९८९.

सांख्ययोगविभागः
संविदाध्यापिका



# धर्मो विश्वस्य जगतः प्रतिष्ठा

**डॉ. ज्योतिप्रसाददाशः**

धर्मस्तु सनातनः। अन्येषां जीवानां प्रति मानवस्य यः व्यवहारोचितधर्मः तत्तु मानवधर्मत्वेनोच्यते। अथेदानीं पाश्चात्यसभ्यतानुकरणजर्जरिते मोहमहान्धकारप्रमत्तकृत्यविवेकविवर्जिते शिष्टाचारविगर्हिते कोलाहलकलंकिते अतिभयोत्पादके विषमकाले प्रायशोऽनादरणीये संस्कृतवाङ्मये ततोऽप्यवहेलिते सदाचारोपदेशमूलक-मन्वादिविरचिते ग्रन्थे विगतश्रद्धानामाधुनिकानां श्रुतिमूलकस्याऽपि स्मृतिकारस्य प्रशस्तिवाचनं यद्यपि नितरां खेदजनकं, तथाऽपि यावदनुश्रुति सृष्टिप्रवाहस्तावच्छ्रुतिस्मृतिविहितसदाचारादयः कैश्चिदास्तिकबुद्धिभिरेवावश्यं पालनीयाः भविष्यन्तीति। अतः श्रद्धाविहीनेऽपि जगति ये केचन धर्मप्राणाः विराजन्ते तेषां कृते धर्मतत्वस्या-वश्यकताऽस्ति वा- ? "धर्मोविश्वस्य जगतः प्रतिष्ठाह्र । न केवलं शास्त्रमाश्रित्य कर्तव्याकर्तव्यनिर्णयः यतो हि युक्तिहीनविचारे तु धर्महानिः प्रजायते। अतः समाजस्य परिरक्षणार्थं युगोपयोगिनि धर्मशास्त्राणि विरचितानि। विरञ्चिप्रपञ्चितेऽस्मिन् भारतभूखण्डे धर्मस्य प्राधान्यं वरीवर्तत इति सर्वेषां प्रेक्षावतां सिद्धान्तः। अयमेवधर्मः सनातनरूपः। अनाद्यनन्तो नित्यः, शुद्धः ,बुद्धश्च। अपि च चतुर्दशविद्यानां प्रेरणोत्सः। अङ्गित्वेन धर्मस्य चतुर्दशविद्यानां अङ्गानि भवन्ति। यतोहि योगीश्वरेण याज्ञवल्क्येन धर्मस्य विद्यानाञ्च चतुर्दशस्थानानि स्वीकृतानि। एताः विद्याः प्रमाणत्वेन सर्वैः स्वीक्रियन्ते। तद्यथा-

**पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।**
**वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश।।**(१)

मूलतः धर्मो वेदेन धर्मशास्त्रेण च प्रमाणितो भवति। वेदाः धर्मशास्त्राणि च लोकातीतार्षचर्क्षुर्मण्डितद्रष्टृणां वाणी भवन्ति। या सार्वदेशिकी सार्वकालिकी नैतिकताद्वारा परिपूर्णास्ति। अस्य तावद्धर्मस्य व्यूत्पत्तिः साधारणतः त्रिधा दृश्यते। **ध्रियते लोक अनेनेति धर्मः। धरति धारयति वा लोकं यः सः धर्मः। ध्रियते लोकयात्रानिर्वाहार्थं यः सः धर्मः।**(२) ऋग्वेदे केषुचित् स्थलेषु धर्मशब्दस्य पुंलिंगे व्यवहारो दृश्यते। अथर्ववेदे धर्मस्य प्रयोगो धार्मिकक्रियाद्वारा अर्जितस्यापूर्वस्यार्थे कृतोऽस्ति। ऐतरेयब्राह्मणेऽपि धर्मशब्दः सकलधार्मिकक्रियायाः प्रवर्तकरूपेण प्रयुक्तो दृश्यते। छान्दोग्योपनिषदि धर्मस्यापरः कश्चिदर्थो निष्पद्यते। यथा गृहस्थधर्मः (यज्ञः, अध्ययनम् , दानम्), तापसधर्मः (तपस्या, ब्रह्मचर्य-धर्मश्च) एवं धर्मशब्दस्य प्रयोगः कालान्तरेण भिन्नरूपतां धृत्वाऽपि मानवस्याचारव्यवहाराधिकारेषु परिचायकत्वेन निश्चीयते। एवम्भूतस्य धर्मस्य लक्षणं कुर्वद्भिः बहुभिराचार्यैरित्थं प्रतिपादितं यत् तावत् पूर्वमीमांसासूत्रे जैमिनिना धर्मस्य लक्षणं प्रतिपादितम्। "तन्त्रवार्तिकानुसारं धर्मशास्त्रं सर्वेषां वर्णानाम् आश्रमाणां च धर्मोपदेशनं करोति।(३) वैशेशिकसूत्रेऽपि श्रीमता कणादेन **यतोऽभ्युदयनिः श्रेयससिद्धिः स धर्मः**।(४) महाभारतस्यानुशासनपर्वणि **अहिंसा परमो धर्मः**। वनपर्वणि **आनृशंस्यं परो धर्मः**। शान्तिपर्वणि च **धारणाद्धर्ममित्यादि** प्रकारेण धर्मो भवति, यः समग्रं विश्वं धारयति।(५) मनुस्मृतौ **आचारः परमो धर्मः** सन्ति।(६) अतएव धर्मे सर्वं प्रतिष्ठितमिति। यद्वचनमस्ति तत्





सत्यमेवेत्यत्र नास्ति काचित् विप्रतिपत्तिः। श्रीमद्भागवतपुराणेऽपि धर्मस्य मूलत्वेन वेदस्य प्राधान्यमङ्गिकृतम्। 'वेदप्रणिहितो धर्मो ह्यधर्मस्तद् विपर्य्ययः' सकलाः वेदाः सर्वाणि धर्मशास्त्राणि च धर्मस्य मूलभूतान्येव। तदुक्तं मनुना 'वेदोऽखिलो धर्ममूलमि'ति आचारस्याऽपि धर्ममूलत्वं स्मृत्यादिग्रन्थेषु स्वीक्रियते। यथा-मातुलस्य कन्यापरिणये चान्द्रायणं करणीयमिति यद्यपि स्मृतिः निर्दिशति, तथाऽपि दक्षिणदेशीयोऽयमाचारस्तत्रत्यैरेवादरणीयः, नेतरैरिति। बौधायनादिवचनपर्यालोचनपूर्वकं एतद् निर्णेतुं शक्यते यत् आचारस्याऽपि धर्मे प्राधान्यं तस्मात् धर्ममूलत्वञ्च सर्वथा स्वीक्रियते। धर्मः स्वयं लोकान् धारयति। येन समाजव्यवस्था सुशृंखलिता भवति । तेन शृङ्खलितसमाजगठनाय धर्मः विशेषस्थानमधिकरोति। यदि अधर्मेण जनाः चिन्तयन्ति, तदा संसारे अशान्तिः राजत्वं करोति। जनाः अशान्ताः भवन्ति, सुखं नानुभवन्ति। अतएव, अस्मिन् जगति यदि अधर्मस्य पापस्य च अभ्युदयो भवति तदा सज्जनानां परिपालनाय संसारस्य रक्षणाय च भगवान् अवतारं स्वीकरोति। श्रीमद्भगवद्गीतायां स्वयं श्रीकृष्णः अर्जुनं प्रति प्रोवाच-

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत। अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्।।**
**परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि युगे युगे।।**(७)

एतादृशेन धर्मेण इदं परिदृश्यमानं विरञ्चि-प्रपञ्चितं जगत् वर्तते। धर्मेण विना एतद् सुशोभितं परिदृश्यमानं जगत् विनष्टं स्यात्। विहितकर्मजन्यो धर्म इति धर्ममक्षणं नैयायिकैः विहितकर्मोपदेशकानां धर्मशास्त्राणां प्रामाण्यमङ्गीकृतमेव । वर्णाश्रमाचारविरुद्धैः हेतुवादिभिरपि प्रजापालनादौ स्वस्वत्वपरिरक्षणादौ च धर्मशास्त्रं नूनं समादरणीयमित्युक्तम्। साक्षाद्भगवती श्रुतिरपि धर्मं प्रशंसति "धर्मो विश्वस्य जगतः प्रतिष्ठा' इति।

धृञ् धारणपोषणयोरित्यास्माद्धातोः मन् प्रत्यये कृते धर्मशब्द निष्पद्यते। ध्रियते पुण्यात्मभिः, धरति लोकान् अनेनेति धर्मः। धर्मलक्षणविषये मनुना उक्तम्-

**विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः।**
**हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत।।**(८)

ततः परं-

**धृतिः क्षमादमोऽस्तेयं शौचमिन्द्रियनिग्रहः।**
**धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्।।**(९)

पुनः-

**वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।**
**एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्।।**(१०)

एवञ्च-

**वेदोऽखिलो धर्ममूलं स्मृतिशिले च तद्विदाम्।**
**अचारश्चैव साधूनामात्मनस्तुष्टिरेव च।।**(११)

धर्मस्य कारकहेतुः यथा-

**देशेकालउपायेन द्रव्यं श्रद्धासमन्वितम्।**
**पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम्।।(१२)**

पुनरपि-

**श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।**
**सम्यक् सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम्।।(१३)**

**निष्कर्ष:-** धर्मो विश्वस्य जगतः प्रतिष्ठा वाक्यमिदं धर्मशास्त्रे व्यवह्रियते। परन्तु वाक्यमिदं उपनिषद्वाक्यम् अस्मादेव वाक्यात् मनसि सतत जिज्ञासा समुदेति यत् कोऽयं धर्मः? किञ्चास्य स्वरूपं, लक्षणम्? का व व्युत्पत्तिः? महाभारतस्य काश्चनोक्ति आचार्याः वदन्ति "**धारणाद्धर्ममित्याहुः धर्मोद्धारयते प्रजाः। यस्योद्धारो संयुक्तः स धर्म इति निश्चयः।।** (१४)मनुष्यः यद्धारयति तदेव धर्मः। किं धारयति ? कस्य निमित्त धारयतीति अनेके प्रश्नाः भवितुमर्हन्ति। इत्यत्र मानवधर्मस्य भावः प्रवलः। कथमिति चेत् सुख-दुःखस्य ज्ञाता, सदसदविचार- कर्तव्याकर्तव्यबोधनकर्ता, धर्माधर्मस्य विवेकबोधः मनुष्यस्य एव भवति। अतएव मन्मते अतिबुद्धिशीलप्राणित्वात् जगति धर्मस्य प्रतिष्ठापनाय मनुष्यः सत्प्रयत्नशीलः नितरां स्यादिति। धर्मं विना मनुष्यसमाजः क्षणमपि स्व जीवनपथं चालयितुमक्षमः। प्रसङ्गेऽस्मिन् आचार्यभर्तृहरिः स्व नीतिशतके लिखति-

**येषां न विद्या न तपो न दानं, ज्ञानं न शीलं न गुणं न धर्मः।**
**ते मर्त्यलोके भूवि भारभूताः, मनुष्यरूपेण मृगाश्चरन्ति।।(१५)**

अपि च युगे युगे धर्मस्याचरणानुरूपं फलं जनाः भुनङ्क्ति। तत्र सत्ययुगे धर्मस्य चत्वारपादाः आसन् त्रेतायां पुनः पादोनं जातम् अर्थात् धर्मस्य त्रयश्चरणाः। द्वापरयुगे द्विचरणधर्मः। कलौ धर्मस्य एकचरणभो भवति। एतदर्थं कलौ धर्म संकुचितं, तपो विरहितं, सत्यञ्च दूरङ्गतं जातम्। लोकाश्च धर्माहता। द्विजाश्च लुभिताः। नारीवशाः मानवाः सञ्जाताः। विचारिते प्रसङ्गे भगवतः श्रीकृष्णस्य वचनमिदं यत्- यदा भूमं अधर्मस्य अभ्युत्थानं भवति, लोकाः असंस्कारेषु प्रवृत्ताः भवन्ति, नीच्चाः महत्त्वमवाप्नोन्ति, तदानीं धर्मस्य संस्काराणां ग्लानिर्जायते। जायमाने ग्लानौ धर्मस्य संरक्षायै भगवतः परंब्रह्मण अवतारोऽपि भवति दुष्टानां विनाशाय, धर्मस्य रक्षणाय, सदाचारस्याभिवर्द्धनाय च।

अस्माकं पुरुषार्थचतुष्टये आदौ तावत् धर्मः। ततः अर्थः, कामः, मोक्षश्च। एते अर्थादि पुरुषार्थाः धर्महीनाः भवन्ति चेत् तत्पुरुषार्थाः न भवितुमर्हन्ति। ज्योतिषशास्त्रे रोगानां प्रशमनाय काचिदुक्ति प्रसिद्धा वर्तते, तद्भवति- " धर्मेण हन्यते व्याधिः' गुरुतरा व्याधयः कदाचित् धर्मप्रभावात् निष्प्रभाः भवन्ति। अतः धर्मस्य प्राधान्यता अस्मिन् जगति आसीत्, अस्ति, स्थास्यति च। अन्तिमे धर्मो विश्वस्य जगतः प्रतिष्ठेति शास्त्रनिर्मातारः।

।। यतो धर्मस्ततो जयेति शम्।।





**सन्दर्भग्रन्थाः-**
१) या.स्मृ. - १/३
२) शब्दकल्पद्रुमे
३) तन्त्रवार्तिके
४) वैशेशिकसूत्रे-
५) महाभारतस्यानुशासनपर्वणि, शान्तिपर्वणि
६) मनुस्मृतौ,
७) श्रीमद्भगवद्गीता चतुर्थोऽध्यायः, श्लो. सं.-७, ८
८) मनुस्मृतिः-२/१
९) मनुस्मृति-६/९२
१०) मनुस्मृति- द्वितीयोऽध्यायः, श्लो.-१२
११) मनुस्मृति- द्वितीयोऽध्यायः, श्लो.-६
१२) या.स्मृ. - १/६
१३) या.स्मृ. - १/७
१४) महाभारतस्य प्रसिद्धा उक्तिः
१५) भर्तृहरेः नीतिशतके

अध्यापकः, ज्योतिषविभागः,
केन्द्रीयसंस्कृतविश्वविद्यालयः,श्रीसदाशिवपरिसरः, पुरी



# आधानविचारः

**डॉ.नीलमाधवदाश**

भारतीयसंस्कृतेरनुसारं स्त्री एव धर्मार्थकामवर्गत्रयाणां साधनी भूता वर्तते। तां विना सृष्टे परिवर्धनप्रक्रियाया: सञ्चालनकार्य्यं न सम्भवति। नारी प्रकृतिरूपा तस्या विविधा: स्वरूपा: दृश्यन्ते यथा - माता, भगिनि, भार्या, पुत्री च। सा मातारूपेण सर्वेषां पालनपोषणञ्च करोति। सहोदरीरूपेण सा मित्रवत् व्यवहरति, दु:खस्य परिहारं करोति। भार्यारूपेण सुखदु:खयो: प्रतिक्षेत्रे सहचरी इव सहयोगं करोति। कन्यारूपेण सा कन्योत्पत्तिरूपं पुण्यफलं ददाति। अनेन प्रकारेण ज्ञायते यत् प्रत्येकस्मिन् क्षेत्रे नारीणां सहयोगं परमावश्यकम्। नारीणां जन्मन: आरभ्य वृद्धावस्थां यावत् तस्या: स्वरूपे विविधता वर्तते। प्रथमं जन्मन: अष्टवर्षं यावत् गौरीरूपा, तत: परं द्विवर्षं यावत् रोहिणीरूपा, तत: परं दशवर्षं यावत् कन्यावस्था भवति। तस्यामवस्थायां कन्या रजस्वला भवेदिति शास्त्रकाराणां मतम्। तस्माद्दशवर्षानन्तरं कन्या पूर्णगर्भधारणयोग्या भवति। यथोक्तम् -

**पूर्णषोडशवर्षा स्त्री पूर्णविशेन सङ्गता ।**
**वीर्यवन्तं सुतं सूते तयोन्यूनाब्दयो: पुन: ।।**
**रोग्यल्पायुरधन्यो वा गर्भो भवति नैव वा ।**

निषेकप्रसङ्गे ऋतोस्तत्र प्रधानत्वात्प्रथमं ऋतुनिरूपणं ततो दम्पत्योर्योगलक्षणम्। तत्र ज्योतिश्शास्त्रदृष्ट्या रजोत्पत्ते: कारणं यत् - स्त्रीणां प्रतिमासमार्तवं कुजेन्दुहेतु। प्रतिमासग्रहणेन प्रथमोद्भूतरजोनिवृत्तिं दर्शयन् गर्भग्रहणक्षममार्तवं प्रदर्शयति। ऋतौ भवमार्तवम्। सामान्यत: जलतत्वकारकग्रह: चन्द्र:, तथाग्नितत्वकारकग्रह: भौमोऽस्ति। पुन: चन्द्र: रक्तकारक:, भौम: पित्तकारको भवति। अत: एतयो: ग्रहयो: संयोगवशात् अर्थात् रक्तपित्तयों: विकारवशात् आर्तवपातो भवति। यदा स्त्रिय: जन्मराशेरनुपचयस्थाने चन्द्रमा भौमेन विक्षित: युतो वा भवेत्तदा रजोत्पत्ति: भवेत्। अर्थात् नार्य: भगात् गर्भधारणयोग्यमार्तवं निर्गतं भवति। तदनन्तरं तस्माद्दिनत्रयं त्यक्त्वा यदि स्त्री पुरुषेण सह संयोगं करोति तदा ऋतुमती नारी गर्भधारणक्षमा भवति। यदा पुंसां जन्मराशित: उपचयस्थाने (३, ६, १०, ११) सूर्यशुक्रौ भवेतां तथा स्त्रीणां जन्मराशित: उपचयस्थाने (३, ६, १०, ११) चन्द्रभौमौ स्यातां तदा गर्भसमुद्भवो भवेदित्याह पुञ्जराजेन -

**बलान्वितावर्कसितौ स्वभांशे पुंसां सदा चोपचये भवेताम्।**
**तथाङ्गनानां शशिभूमिजौ वा तदा भवेद्गर्भसमुद्भवश्च** ।।(श.हो.अ.४, श्लो.१, पृ.सं.३८)

तथा च बृहज्जातके ऋतुनिरूपणमृतावपि स्त्रीपुरुषसंयोगज्ञानमुक्तम् -

**कुजेन्दू तु प्रतिमासमार्तवं गते तु षोडर्क्षमनुष्णदीधितौ।**





**अतोऽन्यथास्थे शुभपुंग्रहेक्षिते नरेण संय्योगमुपैति कामिनी।।** (बृ.जा.नि.अ.श्लो.१)

तथा च सारावल्याम् -

**अनुपचयराशिसंस्थे कुमुदाकरबान्धवे रुधिरदृष्टे।**
**प्रतिमासं युवतीनां भवतीह रजो ब्रुवंत्येके।।**
**इन्दुर्जलं कुजोग्निर्जलमस्रं त्वग्निरेव पित्तं स्यात्।**
**एवं रक्ते क्षुभिते पित्तेन रज: प्रवर्त्तते स्त्रीषु।।**
**एवं यद्भवति रजो गर्भस्य निमित्तमेव कथितं तत्।**
**उपचयसंस्थे विफलं प्रतिमासं दर्शनं तस्य ।।**

तत्रापि स्त्रीपुरुषयो: मिथुनप्रकृति: कथं स्यादिति विचार: आधानलग्नात्प्रश्नलग्नाद्वा सप्तमभावस्थराशिवशात् भवति। अर्थात् आधानचक्रे सप्तमभावे शुभाशुभग्रहाणां युतिदृष्टिवशात् स्त्रीपुरुषयो: मिथुनं विचारणीयम्। तद्यथा यदि आधानकुण्डल्यां सप्तमभावे पापग्रहाणां दृष्टि: युतिश्च स्यात्तदा रोषकलहयुक्तमैथुनम्। तत्र यदि शुभग्रहाणां दृष्टि: युतिश्च स्यात्तदा हास्यविलासयुक्तमैथुनम्। अथदिव न केनचिद्युतदृष्टे न सरोषो नापि सविलास इति। मिश्रितयुतदृष्टे सरोष: सविलासहासश्चेति यथोक्तं शम्भुहोराप्रकाशे -

निषेकेऽस्तराशिर्यथा मैथुने च तथा तत्सम: पुरुषो मैथुने स्यात् ।
असत्खेचरै: संयुते वीक्षितेऽस्ते सरोष: शुभैर्हास्ययुक्तद्विलास:।।(श.हो.अ.४, श्लो.३, पृ.सं.३८)

तथैव मैथुनज्ञानप्रकारं बृहज्जातकेऽपि उक्तम् -

**यथास्तराशिर्मिथुनं समेति तथैव वाच्यो मिथुनप्रयोग:।**
**असद्ग्रहालोकितसंय्युतेऽस्ते सरोष इष्टै: सविलासहास:।।** (बृ.जा.नि.अ.श्लो.२)

मैथुनादनन्तरं गर्भसम्भवासम्भवज्ञानं करणीयम्। अत: बृहज्जातके वराहमिहिराचार्य: उल्लेखति यत् - गर्भसम्भवासम्भवज्ञानं सूर्यचन्द्रशुक्रभौमानां शुभाशुभप्रभावै: क्रियते। एतै: स्वनवांशकस्थितै: गर्भसम्भवो भवति। अर्थात् यत्र कुत्रापि राशौ सूर्येन्दुशुक्रभौमा: स्वनवांशगता: स्युस्तदा निश्चयेन गर्भे सन्ततिर्भवति। यदि च सर्वे स्वभागगा न स्युस्तदा पुरुषोपचयर्क्षगाभ्यां सूर्यसिताभ्यां स्वनवांशकगाभ्यामेव गर्भसम्भवो वाच्य:। एवं भौमचन्द्राभ्यां कन्योपचयर्क्षगाभ्यां स्वनवांशकस्थाभ्याम् आधानकालेऽवश्यमेवापत्यं भवति। गुरौ त्रिकोणस्थो: नवमपञ्चमयो: लग्नेऽपि वा अन्यतमस्थाने संस्थिते अपत्यसम्भवो भवति। षण्ढानां स्त्रीपुरुषाणां विद्यमाना एते योगारपि अफला भवन्ति। यथोक्तम् -

**रवीन्दुशुक्रावनिजै: स्वभागगैर्गुरौ त्रिकोणोदयसंस्थितेऽपि वा।**
**भवत्यपत्यं हि विबीजिनामिमे करा हिमांशोर्विदृशामिवाफल:।।** (बृ.जा.नि.अ.श्लो.३)

प्रसङ्गेऽस्मिन् पुंस्त्रीगर्भोत्पत्तौ कारणं प्रतिपादयति शम्भुहोराप्रकाशे -

**स्त्रीणामृतु: षोडशकं निशानां तासां त्यजेत्सप्तकमत्र पूर्वम्।**

**समे नराणां विषमेऽङ्गनानां गर्भा भवेयु: पुरुषस्य योगात्।।**
**शनैश्चरक्ष्मासुतशुक्रसूर्यैर्निजांशगैश्चोपचयस्थितैश्च।**
**त्रिकोणलग्नोपगते सुरेज्ये वीर्यान्विते गर्भसमुद्भव: स्यात्।।**
**वीर्यान्विते लग्नगते सुरेज्ये त्रिकोणसंस्थे यदिवाऽत्र योग:।**
**स्युर्निष्फलास्ते हतवीर्यकाणां वीणेवशब्दा: श्रववर्जितानाम्।।**(श.हो.अ.४, श्लो.४-६, पृ.सं.३१

अर्थात् स्त्रिणां ऋतुदिवसात् षोडशरात्रिं यावत् गर्भधारणक्षमता वर्तते। अत: प्रथमसप्तदिवस त्यक्त्वा तदनन्तरे विषमसंख्यकदिने संयोगे सति कन्यागर्भ:, समसंख्यकदिने संयोगे सति पुंगर्भ: तिष्ठति स्त्रीगर्भे सन्ततिरस्ति न वा इति ज्ञातुं कथ्यते यथा - गर्भाधानकुण्डल्यां वा प्रश्नकुण्डल्यां यदि सूर्यचन्द्रशुक्रभौम नवांशे स्ववर्गेषु स्युस्तदा गर्भसम्भवो भवति। यदि गर्भाधानकुण्डल्यां वा प्रश्नकुण्डल्यां ग्रहा: उपचयस्थ स्थिता: स्यु: तथा सूर्य: शुक्रस्य नवांशे स्यात्तदा गर्भसम्भवो भवति। तत्र यदि भौमचन्द्रौ अनुपचयर्क्षगौ स्यात पुंसाम्, स्त्रीणाञ्च तथा त्रिकोणे (५, ९) बृहस्पति: स्यात्तदा गर्भसम्भवो भवति। उपर्युक्तयोगा: तदा सम्भवेयु यदा स्त्रीपुरुषौ नपुंसकौ न भवेताम्।

प्रथमसन्तान: कन्याजन्म वा पुत्रजन्म ? इति विचार: स्पष्टिक्रियते जातकाभरणे। तथात्र पुंस्त्रीजन्मज्ञा कथितमिति यथोक्तम् -

**लग्ने द्वितीये यदि वा तृतीये विलग्ननाथे प्रथम: सुत: स्यात्।**
**तुर्यस्थितेऽस्मिंश्च सुतो द्वितीय: पुत्री सुतो वेति पुर: प्रकल्प्यम्।।**
**द्विदेहसंस्था भृगुभौमचन्द्रा: सन्तानमादौ जनयन्ति पुत्रम्।**
**एते पुनर्धन्विगता न कुर्यु: पश्चात्तथादौ गदितं महद्भि:।।** (जा.भ.पृ.सं.७३, श्लो.२,४)

अर्थात् जन्मकुण्डल्यां तनुभावे द्वितीयभावे तृतीयभावे चान्यतमे स्थिते लग्नेशे आदौ पुत्रजन्म जायते। यदि चतुर्थभावे लग्नेशे सति द्वितीयगर्भ: सुतो भवति। यदि पञ्चमभाव: शुभग्रहै: दृष्ट: स्यात्तदा नू सन्तानयोग:। यदि शुभग्रह: पञ्चमेश: पञ्चमभावश्च परस्परदृष्ट: युतश्च न स्यात्तदा सन्तानसुखस्याभावो भवति। यदि शुक्रभौमचन्द्रा: द्विस्वभावराशौ स्थिता: स्युस्तदा प्रथमपुत्र: जायते। परन्तु एते धनुराशौ यदि स्थिता: स्युस्तर्हि सन्तानस्याभाव:।

प्रसङ्गेऽस्मिन् स्त्रीपुरुषयोराधानकालवशात् प्रसवविधि: तच्छुभाशुभज्ञानञ्चोच्यते बृहज्जातके -

**दिवाकरेन्द्वो: स्मरगौ कुजार्कजौ गदप्रदौ पुङ्गलयोषितोस्तदा।**
**व्ययस्वगौ मृत्युकरौ युतौ तथा तदेकदृष्ट्या मरणाय कल्पितौ।।** (बृ.जा.नि.अ.श्लो.४)

अर्थात् सूर्यात् सप्तमस्थाने यदि शनिकुजौ भवतस्तदा एतौ मनुषस्य रोगप्रदौ भवत: स्वमासे। तथैव चन्द्रात् सप्तमस्थाने यदि शनिकुजौ भवतस्तदा एतौ स्त्रीया: रोगप्रदौ भवत: स्वमासे। तावेव द्वादशद्वितीयगौ कुजसौरौ भवेतामर्थात् तयो: दिवाकरेन्द्वो: सकाशादुभयत्र स्थितौ शनिभौमौ तदा स्त्रीपुरुषयो: मृत्युकरौ भवत:।





सूर्याद् द्वादशे द्वितीये च स्थितयो: तयोर्मध्ये यो बलवान् स स्वमासे नरस्य मृत्युकरो भवति। चन्द्रादपि व्यवस्थितयो: कुजसौरयो: यो बलवान्स स्वमासे स्त्रिया मृत्युकरो भवति। तथा च कुजसौरयोर्मध्याद्यैकेनादित्यो युतो भवत्यन्येन दृश्यते चेत्तदा नरस्य मरणाय कल्पित:। एवं यदि चन्द्रमा एकेन युक्त: स्यादपरेण दृष्टस्तदा स्त्रिया मरणाय कल्पित:।

प्रसङ्गेऽस्मिन् शम्भुहोराप्रकाशे गर्भधारणसमयात्मातापित्रोररिष्टविचार: प्रतिपाद्यते यत् -

**यथा नृनार्योर्हि मन: स्वभावं रतौ तथा गर्भगतोऽत्र जन्तु:।**
**द्यूने रवेर्मन्दकुजौ तु पुंसो रोगप्रदौ शीतरुचे:स्त्रियश्च।।**
**सूर्ये यमारांतगते तु पुंस: स्त्रियास्तथेन्दौ मृतिदौ तयो: स्त:।**
**मन्देन वाऽऽरेण दिवाकरेन्दू युक्तौ च दृष्टौ निधनं तयोर्वा ।।**
**स्वर्क्षस्थितौ रन्ध्रगतौ यमार्कौ प्रष्टु: स्त्रियं संदिशतश्च वन्ध्याम्।**
**छिद्रस्थितौ चन्द्रबुधौ सदोषां वा काकवन्ध्यां वदतोऽङ्गनां वै।।**(श.हो.अ.४, श्लो.७-९, पृ.सं.३९)

आधानलग्न-प्रश्नलग्न-सूर्यचन्द्रेभ्य: शिशो: आरोग्यादि शुभाशुभविषया: विचार्यन्ते। तत्राऽपि सूर्यात् पुरुषस्य, चन्द्रात् स्त्रिया: आरोग्यादि शुभाशुभविचार: करणीय:। यदि आधानकुण्डल्यां प्रश्नकुण्डल्यां वा सूर्यात् सप्तमे कुजशनैश्चरौ भवेतां तदा पुरुष: रोगेण पीडितो भवति। यदि सूर्यात् द्वितीये द्वादशे कुजशनैश्चरौ स्यातां तथा तयो: मध्ये य: सर्वाधिकबलवान् स्यात्तस्य ग्रहस्य परिमितमासे पुरुषस्य मृत्युर्भवति। एवं चन्द्रात् द्वितीये द्वादशे यदि अङ्गारकशनैश्चरौ भवेतां तथा तयो: मध्ये य: सर्वाधिकबलवान् स्यात्तस्य ग्रहस्य परिमितमासे मातु: मृत्युर्भवति। यदि आधानलग्नं प्रश्नलग्नं वा शनिभौमाभ्यां युत: दृष्ट: आक्रान्तश्च स्यात्तदा गर्भनष्टो जायते।

गर्भाधानात्मातृपितृसंज्ञादिग्रहाणां विचार: -

**दिनेऽर्कशुक्रौ पितृमातृसंज्ञौ नक्तं शनीन्दू सहजेऽन्यथा तत्।**
**पितृव्यमातृष्वसृसंज्ञितौ च तयो: शुभावोजसमर्क्षगौ तौ ।।**(श.हो.अ.४, श्लो.१४, पृ.सं.४०)

शम्भुहोरायां निषेककालवशात् पितृमातृभगिन्यादिकारकग्रहा: उक्ता: तथा च आधानचक्रे तेषां स्थितिवशात् शुभाशुभफलं प्रतिपादितम्। तद्यथा - दिवसे पितृकारक: सूर्य:, मातृकारक: शुक्रोऽस्ति। तथा च पितृव्यकारक: शनि:, मातृव्यकारक: चन्द्रो भवति। किन्तु रात्रौ एतस्य विपरितक्रमेण पितृमातृकारकग्रहा: ज्ञेया:। अर्थात् रात्रौ निषेके सति शनि: पितृकारक:, चन्द्र: मातृकारक:, सूर्य: पितृव्य:, शुक्र: मातृव्यश्च भवति। तत्र विषमराशौ व्यवस्थितौ शनिसूर्यौ शुभफलं प्रयच्छत:, समराशौ व्यवस्थितौ शुक्रचन्द्रौ शुभफलं प्रयच्छत:। तद्यथा - रात्रौ आधाने सति समराशिस्थ: चन्द्र: मातु: कृते शुभकृत् स्यात्। दिवसे आधाने सति समर्क्षग: चन्द्र: मातृस्वसु: कृते शुभफलदायको भवति। एवमेव अन्येषां शुभाशुभं ज्ञातव्यमस्ति। यदा निषेके लग्नचन्द्रौ क्रूरान्तस्थौ अथ क्रूरग्रहै: दृष्टौ संयुतौ वा स्यातां तथा एतौ शुभग्रहै: नैव युक्तौ वीक्षितौ वा भवेतां

तदा नारी गर्भेणान्विता मृत्युमेति। यदि लग्नाच्चन्द्रात् वा बन्धुस्थाने पापग्रहाः स्युः, अष्टमे भौमे यद्वा कुज व्ययबन्धुसंस्थौ, क्षीणे चन्द्रे सति नारी गर्भेणान्विता मृत्युमेति। यदा आधाने चन्द्रात्सुतस्थः शुक्रः शनियुतो दृष्टश्चेत्तद्योगः मातृहन्ता भवति। यदा आधाने चन्द्रात्कर्मगतः सपापकः सूर्यः मातुरनिष्टदः स्यात्।

प्रसङ्गेऽस्मिन् वराहमिहिरवचनम् -

दिवार्कशुक्रौ पितृमातृसञ्ज्ञि

मासि मासि गर्भगतजीवावयवा मासेश्वराश्च

**कललं च घनं शाखास्थित्वग्रोमोद्गमः स्मृतिः।**

**भुक्तिरुद्वेगसंभूतिर्मासेष्वाधानतः क्रमात्।।**

**शुक्रारजीवार्कशशीयमज्ञलग्नेशशीतांशुदिवाकराः स्युः।**

**मासेश्वरास्तैः कलुषैः प्रपीडा पातो हतैर्वीर्ययुतैश्च पुष्टिः।।**

**वीर्याढ्यः स्यान्मासपः स्वोच्चगो वा वृद्धिर्गर्भस्येव चेन्निघ्नवीर्यः।**

**अस्तं यातो नीचगः पापयुक्तस्तत्तन्मासे जायते गर्भपातः।।**(श.हो.अ.४, श्लो.२०-२२, पृ.सं.४

दम्पत्योः सम्भोगानन्तरं तयोः शरीरात् निर्गतं शुक्रशोणितविन्दुः श्लेष्मसदृशः वर्तते। तदनन्त तद्विन्दुः प्रतिमासे भिन्न-भिन्नस्वरूपं धरति। गभिर्ण्याः गर्भस्य प्रथममासस्य स्वरूपः श्वेतश्लेष्मसदृशो भवति अस्याधिपतिः शुक्रः। रजवीर्ययोः मेलनेन द्वितीयमासे गर्भे विद्यमानश्लेष्माकारः घनं काठिन्यञ्च भवति अस्याधिपतिः भौमः। तत्र तद् घनपिण्डः यदि ग्रन्थ्याकारः भ्रूणः स्यात्तदा तस्मिन् गर्भे पुरुषो भवति। य दीर्घमांसपेश्याकारः स्यात्तदा गर्भे कन्या अस्तीति चिन्तयेत्। यदि अर्वुदाकारः स्यात्तदा गर्भे नर्पुसकः अस्ती चिन्तयेत्। एवं प्रकारत्रयेण द्वितीयमासे स्त्रीपुरुषनपुंसकानां गर्भज्ञानं क्रियते। तृतीयमासे गर्भिण्याः गर्भे घनपिण्ड शिरःप्रभृत्यङ्गानि जायन्ते, अस्य मासस्याधिपः जीवः। चतुर्थमासे गर्भिण्याः गर्भे शिरःप्रभृत्यङ्गेषु अस्थिनिर्मा जायते, अस्य मासस्याधिपः सूर्यः। गर्भात् पञ्चममासे गर्भस्य मांसशोणितोपचयोऽन्येभ्यो मासेभ्यः अधि स्यात्तस्य गर्भाकारोऽपि अधिकवृद्धिः जायते। अस्य मासस्याधिपः चन्द्रः। गर्भात् षष्ठमासे गर्भस्य बलस्योपच भवति। एतदर्थं गर्भिणी बलवर्णहानिमापद्यते। अर्थात् मातृबलहानिः भवति। अस्य मासस्य स्वामी शनिः सप्तमे मासि गर्भावस्था सर्वतो भावेन पुष्टिकरा भवति। अस्मिन् मासि गर्भस्थभ्रूणस्य चैतन्यमागच्छति एवमत्र गर्भिणी अन्यमासस्यापेक्षया अस्मिन् मासे अधिका दुर्बला भवति। अस्य मासस्य स्वामी बुधोऽस्ति गर्भादष्टममासे गर्भस्य शरीरावयवः परिपूर्णो भवति। तत्र मातृहृदये गर्भनाड्यां रसवाहीनीभिः सम्बन्धित गर्भरसवाहीन्यः परस्परमोजम् आददान्ते इति मातृरजः गर्भ आदत्ते तथा गर्भः मातृसंवन्धेन तिष्ठति। गर्भस पीडायाः संवर्धनं भवति। एवं मात्रा भूक्तं सर्वं नाभिनालेन पिवति। अस्य मासस्याधिपः लग्नाधिपतिः नवममासे गर्भस्य वेदना वर्द्धते किन्तु प्रसवदृष्ट्या अयं मासः विशेषः मातुः शरीरस्य गुरुता क्रमशः अधिक महत्वपूर्णा भवति। अस्य नवममासस्य स्वामी चन्द्रोऽस्ति। दशममासे विघ्नरहितः प्रसूतिर्जायते। मासस्याधिपति





सूर्यः।

अत्र यः मासपः वीर्याढ्यः शुभग्रहैः युक्तः स्वोच्चगः स्यात्सः तस्य मासे गर्भस्य वृद्धिं करोति। यदि मासपः बलहीनः अस्तं यातो नीचगः पापयुक्तः स्यात्तन्मासे सः गर्भपातं करोति। तत्रापि कथ्यते यदि आधनलग्ने शनिभौमौ स्यातां तदा स्त्रीणां गर्भस्रावो भवति। यदि तत्र चन्द्रोऽपि स्यात्तदा गर्भपातो भवति।

क्लीबयोगाः - यदि चन्द्रसूर्यौ विषमर्क्षगौ अन्योन्यं चन्द्रः सूर्यं, सूर्यश्चन्द्रं च पश्यतस्तदैकः क्लीबयोगः जायते। विषमर्क्षगौ शनिबुधौ च तथा परस्परं पश्यतस्तदा द्वितीयो योगः। यदि विषमगतो भौमः समराशिगतं सूर्यं पश्यति तदा तृतीयो योगः। चन्द्रो लग्नश्च विषमराशौ भवेतामपि च भौमेनेक्षितौ तदा चतुर्थो योगः। समविषमराशिस्थितौ चन्द्रबुधौ मङ्गलेन विक्षितौ स्यातां तदा पञ्चमो योगः। शुक्रलग्नचन्द्राः पुरुषराशिनवांशके स्युस्तदा षष्ठो योगः। इमे षट् क्लीबयोगाः सन्ति। जन्मकाले निषेके प्रश्ने वा अमी योगा नपुंसकजन्मदा भवन्तीति। यथोक्तं जातकपारिजाते -

**अन्योन्यं यदि पश्यतः शशिरवी यद्यार्किसौम्यावपि**

**वक्रो वा समगं दिनेशमसमे चन्द्रोदयौ चेत्स्थितौ।।**

**युग्मौजर्क्षगतावपीन्दुशशिजौ भूम्यात्मजेनेक्षितौ**

**पुंभागे सितलग्नशीतकिरणाः षट् क्लीबयोगास्त्विमे।।**(जा.पा.वियो.अ.३, श्लो.२३)

पुंस्त्रीयमलाद्युत्पत्तियोगा -आधानकुण्डलीतः पुंस्त्रीयमलादिज्ञानं नैकग्रन्थेषु बुधैः उक्तम्। तत्र यथोक्तं शम्भुहोराप्रकाशे -

**ओजर्क्षकांशोपगतौ रवीज्यौ सूतौ च पुंजन्मकरौ निषेके।**

**समर्क्षकांशोपगताः सितेन्दुधरात्मजाः स्त्रीजननप्रदाः स्युः।।**

**गुर्वर्कयोश्चापनृयुग्मभांशे ज्ञदृष्टयोः पुंयुगलं तदा स्यात्।**

**तद्वच्च कन्याझषगैः सितारकलाधरैः स्त्रीयुगलं सवीर्यैः।।**(श.हो.अ.४, श्लो.२६-२७)

अर्थात् आधानकाले यदि सूर्यगुरू विषमराशौ विषमनवांशे च स्थितौ स्यातां तदा निषेकः पुंजन्मकरो भवति। यदि शुक्रचन्द्रभौमाः समराशौ समनवांशे च स्थिताः स्युस्तदा निषेकः कन्याजन्मकरो भवति। तत्रापि बुधेन दृष्टौ गुरुसूर्यौ धनुमिथुननवांशे यदि भवेतां तर्हि पुंयुगलं जन्म भवति। तद्वच्च स्ववीर्यैरन्विताः कन्यामीनांशगाः शुक्रचन्द्रभौमाः कन्यायुगलप्रदाः स्युरिति भावः।

यदि आधानकुण्डल्यां शतभिषानक्षत्रे जीवस्तथा नवमे तृतीये वा राशौ स्थितः सूर्यः बुधेन दृष्टः स्यात्तदा यमलपुत्रोत्पत्तिः भवति। प्रतिपादितसन्तत्युत्पादकग्रहैः सर्वैः बलयुक्तैः धनुराशिनवांशगतैश्च तथा बुधसूर्याभ्यां चावलोकितं लग्नं चेत्तदा गभिण्याः गर्भे जरायुयुक्ताः सन्ततयः भवन्ति। तत्रापि आधनकुण्डल्या निर्बलग्रहप्रभावात् तस्य मासे गर्भस्रावो भवति। यदि धनुराशेरन्तिमांशे स्थिताः पूर्वोक्तग्रहाः बुधशनैश्चराभ्यां दृष्टाः स्युस्तदा त्र्यधिकाः सन्ततयः भवन्ति।क्लीबयोगाः - ग्रन्थान्तरेषु नैकाः क्लीबयोगाः लक्षिताः।

औजेऽब्जलग्ने क्षितिजेन दृष्टे समौजगौ वा द्विजराजसौम्यौ।
ओजांशके भार्गवलग्नसूर्यौ वीर्यान्वित: क्लीबजनु:करा: स्यु:।।
समोजभस्थावपि लग्नसूर्यौ परस्परं चेत्परिपश्यतो वा।
कुजोऽप्यनु वा शनिसोमजौ वा तदुच्च तौ क्लीबकरौ निरुक्तौ ।।(श.हो.अ.४, श्लो.२६-२७)

वामनादिहीनांङ्गयोगा: -संसारे समुत्पन्नेषु प्राणीषु शरीराकारदृष्ट्या सर्वेषामाकार: प्रकारश्च भि
भिन्नो भवति। तत्र कस्यचिदाकार: लघुकाय: दीर्घकायो वा। यथोक्तं वराहमिहिराचार्येण वामनयोग: -

सौरशशाङ्कदिवाकरदृष्टे वामनको मकरान्त्यविलग्ने।
धीनवमोदयगैश्चदृकाणै: पापयुतैरभुजाङ्घ्रिशिरा: स्यात्।।(बृ.जा.नि.अ.श्लो.११)

मतद्वेऽस्मिन् मतैक्यमस्ति शम्भुहोराप्रकाशबृहज्जातकयो:। शम्भुहोराप्रकाशे प्रतिपादितम् य
मकरराशेरन्तिमांशे कन्यानवांशे वा लग्ने शनिसूर्यचन्द्रै: दृष्टे सति गर्भस्थ: वामनाकारो भवति। तथापि कोऽपि
निषेककालस्य लग्नद्रेष्काण: यदि कुजेन युक्त: शनिचन्द्रसूर्यै: दृष्ट: स्यात्तदा गर्भस्थ: बाल: शिरहीन: वाच्य:
एवञ्च निषेककालस्य पञ्चमभावद्रेष्काण: यदि चापेन भौमेन च युक्त: शनिचन्द्रसूर्यै: दृष्ट: स्यात्तदा गर्भस्थ:
बाल: हस्तविहीनो वक्तव्य:। तथा च नवमभावद्रेष्काण: यदि भौमेन युक्त: शनिचन्द्रसूर्यै: दृष्ट:, शुभै: अदृ
स्यात्तदा गर्भस्थ: बाल: पादविहीनो वाच्य:। त्रिप्रकारेऽपि योगे भुजाङ्घ्रिशिरोहीनानां विकल्पेन गर्भस्थस्य
सम्भवमाहु:। यथोक्तं गर्गेण -

लग्नद्रेष्काणगो भौम: सौरसूर्येन्दुवीक्षित:।
कुर्याद्विशिरसं तद्वत्पञ्चमे बाहुवर्जितम्।
विपदं नवमस्थाने यदि सौम्यैर्न वीक्षित:।।(बृ.जा.नि.अ.श्लो.११, भट्टोत्पलटीकायाम्)

एतेन स्पष्टं यत् लग्नपञ्चमनवमभावानां द्रेष्काणत्रयं यदि पापयुक्तं स्यात्तदा गर्भस्थबालस्य अङ्गविकार:
दृश्यते। तत्र यदि लग्नात् नवमे पञ्चमे वा बुध: व्यवस्थित:, एवं सूर्यादय: अपरे ग्रहा: यदि निर्बला: स्युस्तर्हि
गर्भे स्थितस्य बालस्य हस्तशिरपादादय: द्विगुणितं भवन्ति।

तदनन्तरं विकलजन्मज्ञानार्थं बृहज्जातके प्रतिपादितं यत् - सिंहलग्ने सूर्यचन्द्राभ्यां संयुते तथाभू
कुजार्किनिरीक्षिते नेत्ररहितो गर्भस्थो वाच्य:। अर्थादिवं केवलं सिंहलग्ने सूर्येण युते शनिभौमाभ्यां दृष्टे
दक्षिणाक्षिकाण:। एवं सिंहलग्ने केवलेन चन्द्रेण युक्ते शनिभौमाभ्यां दृष्टे वामाक्षिकाण:। तस्मिन्नेव सिंहलग्ने
सूर्यचन्द्राभ्यां युक्ते शुभपापग्रहै: दृष्टे गर्भस्थ: सबुद्बुदलोचन: पुष्पिताक्षो वाच्य:। निषेककाललग्नाज्जन्मलग्नाद्वा
यस्य चन्द्रमा द्वादशस्थो भवति तस्य वामं चक्षुर्हीनास्ति। एवं लग्नाद् द्वादशस्थ: सूर्योऽपरं दक्षिणं चक्षुर्हीनास्ति।
यदा योगकर्तार: शुभग्रहै: दृष्टा भवन्ति तदा ते योगा पूर्णं यथोक्तं फलं न प्रयच्छन्ति।

सन्दर्भग्रन्था:

१) जातकपारिजात:
श्री वैद्यनाथ:





सम्पादक:-सुरेशचन्द्र मिश्र
रंजन पब्लिकेशन्,नई देहली : २००५।

२)जातकाभरणम् — श्रीदुण्ढिराजदैवज्ञ:
व्याख्याकार:-श्री सीताराम झा
श्रीठाकुर प्रसाद पुस्तक भण्डार,
कचौड़ीगली, वाराणसी-१ : १९९३

३) फलदीपिका — पं श्री मन्त्रेश्वर:
सम्पादक:-सुरेशचन्द्र मिश्र:
रंजन पब्लिकेशन्,नई देहली : २००४।

४)फलित विकास — पं रामयत्नओझा
सम्पादक:-सुरेशचन्द्र मिश्र
रंजन पब्लिकेशन्, नईदिल्ली :२०००।

५) बृहज्जातकम् -- वराहमिहिराचार्य:
सम्पादक: पं श्री सीताराम झा,
ज्यौतिष प्रकाशन, वाराणसी :२००१।

६) शम्भुहोराप्रकाश: — पुञ्जराजविरचित:
हिन्दीटीका पं महीधरशर्मा,
खेमराज श्रीकृष्णदास, श्रीवेंकटेश्वरप्रेस, खेमराज, मुम्बई।

७)सारावली — कल्याण वर्मा
सम्पादक:-सुरेशचन्द्र मिश्र
रंजन पब्लिकेशन्-नईदिल्ली : २००४।

ज्योतिषविभाग:,
श्रीसदाशिवपरिसर:, पुरी



# श्राद्धतत्त्वस्य सामान्यविवेचनम्

डॉ.श्रीमती शकुन्तलादाश:
अध्यापिका(अंशकालिका)

"श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृति:" [१] इति मनुवचनात् ज्ञायते । शास्त्रं नाम शिष्यते उपदिश्यते नियम्यते अनेन इति शास्त्रम् । अत: धृञ् मन् शास् ष्ट्रन् इत्यनेन धर्मशास्त्रशब्दस्य निष्पत्ति: । धर्मप्रतिपादकं शास्त्रं धर्मशास्त्रं वेति धर्मशास्त्रशब्दस्य व्युत्पत्तिर्भवति। भारतीयसंस्कृतवाङ्मये प्राचीनतमग्रन्थो भवति धर्मशास्त्रम् । वैदिककालादारभ्य अद्यावधि शास्त्रस्यास्य प्रचार: प्रसारश्च प्रचलित: । धर्मशास्त्रं न केवलं भारतवासिनां मध्ये अपि तु देशदेशान्तरेष्वपि आदरणीयं भवति । सकलशास्त्रमुकुटायमानत्वेन श्रुतिशास्त्रार्थानुमापकत्वेन निखिललोकसुरक्षकत्वेन सर्वप्राचीनतमस्यास्य शास्त्रस्य महत्वं स्मृतिनिवन्धकारै: प्रदर्शितम् ।

श्रीमता कुलमणिमिश्रशर्मणा धर्मशास्त्रलक्षणविषये श्रीदेवयानपत्रिकायां[२] लिखितं यत्- " धर्मशास्त्रं नाम सकलशास्त्रपुरस्कृतं निखिललोकसुक्षकं कृत्याकृत्यविवेकप्रतिपादकत्वेन नित्यनियतोपादेयं साक्षाद् वेदर्थानुमापकत्वेन वेदावत् प्रमाणभूतं तप:स्वाध्यायपूतश्चरित्राणां यमनियमानुष्ठाननिष्ठवतां नित्यनिरतिशयप्रयतात्मनां निखिलसंस्कारसंस्कृतानामात्मगुण-विवेचितान्तकरणानां ब्रह्मादिस्तम्भपर्यन्तं सकलभूतहिताकांक्षिणां सर्वजनग्रहणीयं गुणिगणसमादरणीयं प्राचीनतमं शास्त्रम् " इति ।

श्रुत्यनुमापकत्वेन प्रमाणभूतस्य धर्मशास्त्रस्य निखिला: विषया: मुख्यत: त्रिधा विभज्यन्ते । सर्वे एते विषया: धर्माधर्मविव प्रतिपादयन्ति । स चायं धर्म: कर्त्तुरभिमतफलवर्षणान्मन्वादिभि:[३] वृष इत्युच्यते। भगवान् वेदोऽपि[४] धर्मं वृषाकृतिमा-चष्टे । अस्य विलक्षणवृषभरूपस्य धर्मस्य चत्वारि शृङ्गाणि यथाक्रमं धर्मस्य वेद-स्मृति-सदाचारात्मतुष्ट्यादि लक्षणानि । तस्यैव धर्मवृषस्य त्रय: पादा: । ते चाचार -व्यवहार -प्रायश्चित्तकाण्डत्रयरूपा: । अत: धर्मशास्त्रस्य विषया: आचार -व्यवहार -प्रायश्चित्तभेदै: विभज्यन्ते ।

धर्म: श्रौतस्मार्त्तभेदेन द्विधा विभक्ता: । स्मार्त्तधर्म: धर्मशास्त्रस्य विषयीभूत: । तत्रार्याणां क्रियमाणानां सकलधर्मार्जनविधय: तथाऽधर्मनिवारणाय प्रतिषेधा अपि वर्णिता: । आचारभागे वर्णधर्म -आश्रमधर्म -वर्णाश्रमधर्माणां विषये विधानं दृस्यते। व्यवहारभागे अभिषेकादिगुणयुक्तस्य राज्ञ: प्रजापालनादिगुणधर्मविषये विचारो दृश्यते। प्रायश्चित्तभागे विहितस्याकरणे निषिद्धस्य च पालने निमित्तधर्म: प्रायश्चित्तधर्मविषये आलोचना दृश्यते ।

मनुयाज्ञवल्क्यगौतमादिभि: महर्षिभि: धर्मशास्त्रेषु धर्मनिरुपणावसरे स्मार्त्तधर्माणां विचार: कृत: । ते च स्मार्त्तधर्मा: विज्ञानेश्वरोक्ता: षड् भवन्ति । यथा- वर्णधर्म:, आश्रमधर्म:, वर्णाश्रमधर्म:, गुणधर्म:,





निमित्तधर्म: साधारणधर्मश्चेति । आचारे एव एतेषु चतुर्णामन्तर्भावो दृश्यते । ते च वर्णधर्म:,आश्रमधर्म:, वर्ण्णाश्रमधर्म:, साधारणधर्मश्चेति । योगीश्वरयाज्ञवल्क्येन स्वस्मृतौ एतेषां चतुर्णामन्तर्भावयता आचाराध्याये श्राद्धनिर्देशो विहित इति महतीयं श्राद्धपरम्परा स्मार्त्तपरम्परया गौरवमावहति । मनुनापि पञ्चमहायज्ञानां विचारावसरे पितृयज्ञत्वेन श्राद्धस्याचारे एव निर्देश: कृत: ।

आयु-प्रजायैहिकफललाभाय स्वर्गादि पारत्रिकफललाभाय सर्वोपरि मोक्षलाभाय च पितृणां यागो धर्मशास्त्रेषु विहित: । स च पितृयाग: श्राद्धनाम्ना प्रसिद्ध: तस्यार्थ-लक्षण-स्वरुपादिविषयप्रतिपादनानन्तरमधुना श्राद्धभेदो विचार्यते । श्राद्धभेदविषये बहुषु स्थलेषु मतान्तरं दृश्यते । एतदर्थं तस्य निर्दिष्टभेदज्ञानं स्पष्टभावेन नैव ज्ञायते । अतो विषयेऽस्मिन् संक्षेपेणालोचनावश्यकी । अस्माकं स्मृतिनिबन्धसाहित्याकाशे श्राद्धस्य श्रेणीविभागो विभिन्नै: धर्मशास्त्रकारै: निबन्धकारैश्च स्व स्व ग्रन्थेषु वर्णित: । प्रथमतस्तेषां वर्गीकरणं क्रियते ।

याज्ञवल्क्यस्मृत्यानुसारं[५] श्राद्धं द्विविधं । पार्वणमेकोद्दिष्टं चेति । तत्र त्रिपुरुषोद्देश्येन यत् क्रियते तत् पार्वणम्, एकपुरुषोद्देश्येन क्रियमाणं श्राद्धमकोद्दिष्टमिति अङ्गीक्रियते । श्राद्धविमर्शकारेणमपि[६] एकोद्दिष्टपार्वण-श्राद्धयोर्लक्षणं कृतम् । यथा तेन-

एकं प्रेतमेवोद्दिश्य यत्श्राद्धं क्रियते तत एकोद्दिष्टम् ।

त्रिपुरुषमुद्दिश्य यत् श्राद्धं क्रियते तत् पार्वणश्राद्धम् ।

पुनश्च मिताक्षराकारेण विज्ञानेश्वरेण श्राद्धं त्रिविधमिति कथितम् । यथा नित्यं नैमित्तिकं काम्यं चेति । पुनश्च श्राद्धं पञ्चविधमिति तेन[७] दर्शितम् यथाा अहरहश्राद्धं,पार्वणं,वृद्धिश्राद्धं,सपिण्डीकरणश्राद्धश्चेति । कूर्मपुराणे[८] श्राद्धं पञ्चविधमिति धर्मसिन्धुग्रन्थे वर्णितमस्ति । यथा-

अहनि अहनि नित्यं स्यात् काम्यं नैमित्तिकं पुन: ।

एकोद्दिष्टं च विज्ञेयं बृद्धिश्राद्धं च पार्वणम् ।।

एतत् पञ्चविधं श्राद्धं मनुना परिकीर्तितम् ।

काणेमहाभागोनापि[९] एतस्मिन् विषये स्पष्टभावेनोल्लिाखितम् । रुद्रधरकृत[१०] श्राद्धविवेके बृहस्पतिना मनुमनुसृत्यं श्राद्धं पञ्चविधमिति प्रतिपादितम् । यथा- नित्य नैमित्तिकं काम्यं वृद्धि पार्वणञ्चेति ।

नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं तथैव च ।

पार्वणं चेति मनुना श्राद्धं पञ्चविधं स्मृतम् ।।

पुनश्च [११]नव-मिश्र-पुराणभेदेन श्राद्धं त्रिविधम् । प्रेतमुद्दिश्याशौचकालमध्ये नवश्राद्धिधानं[१२] भवति ।

यथा-

प्रथमेऽहनि तृतीये च पञ्चमे सप्तमे तथा ।

नवमैकादशे चैव तन्नव श्राद्धमुच्यते ।

नवमिश्रपुराणभेदात् श्राद्धानि त्रिविधानीति पृथ्वीचन्द्रोदयोऽङ्गीरावचनाल्लभ्यते ।

तत्रान्तर्दशाहैकादशाहे च क्रियमाणानि श्राद्धानि शुद्धिसंज्ञकानि । तदुध्र्वमावर्षात् क्रियमाणानि मिश्राणि । तदृध्व पुराणानेति ।

[13]धर्मसिन्धुकारेण काशिनाथोपाध्यायेन श्राद्धं चतुर्विधमिति प्रतिपादितम् यथा-

तत्र श्राद्धं चतुर्विधं पार्वणश्राद्धमेकोद्दिष्टश्राद्धं नान्दिश्राद्धं सपिण्डीकरणश्राद्धं चेति भेदात् । यद्यपि विश्वामित्रसंहितायां श्राद्धस्य द्वादशभेदाः न दृश्यन्ते तथापि ग्रन्थपरम्परानुसारं विश्वामित्रमतं दृश्यते । तानि श्राद्धानि तु भविष्यपुराणे दृश्यन्ते। तद्यथा-

नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम् ।

पार्वणं-चेति विज्ञेयं गोष्ठ्यां शुद्धयर्थमष्टमम् ।।

कर्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम् ।

यात्रास्वेकादशं प्रोक्तं पुष्टयर्थं द्वादशं स्मृतम् ।।

आश्वालयनमतानुसारेण श्राद्धं पञ्चविधम् । तद्यथा-

काम्यं नैमित्तिकं वृद्धिरेकोद्दिष्टं च पार्वणम् ।

श्राद्धं पञ्चविधं प्राहुर्विप्राः शास्त्रस्य वेदिनः ।।

एवं प्रकारेण श्राद्धानां विभागः स्मृतिकारैः कृतः । अत्र क्रमशः तेषां लक्षणानि उपस्थाप्यन्ते प्रथमतः एकोद्दिष्टश्राद्धस्य लक्षणं- कालविषये आलोच्यते ।

एकोद्दिष्टश्राद्धम्-

[15]एकपुरुषोद्देश्येन क्रियमाणमेकोद्दिष्टमिति । पुनश्च [16]श्राद्धविमर्शे प्राप्यते यत् एकं प्रेतमेवोद्दिश्यं यत् श्राद्धं क्रियते तद् एकोद्दिष्टमिति ।

पार्वणश्राद्धम्-

त्रिपुरुषोद्देश्येन यत् क्रियते तत्पार्वणमिति [17]विज्ञानेश्वरेणोक्तम् । पार्वणश्राद्धस्य परिभाषा [18]भविष्यपुराणे श्राद्धतत्त्ववचनरुपेणोपलभ्यते । यथा-

अमावास्यायां यत् क्रियते तत्पार्वणमुदाहृतम् ।





क्रियते वा पर्वणि यत् तत्पार्वणमुदाहृतम् । इति

कश्चित् पर्वदिने संपादितेति पार्वणम् । अत्र पर्व नाम अमावास्या,पूर्णिमा,चतुर्दशी,अष्टमी, संक्रान्ती, च इति विष्णुपुराणे वर्णितमस्ति । कल्पतरुकारेणापि पर्वविषये एतद् मतं समर्थयति। यथा-

चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा ।

पार्वण्येतानि राजेन्द्र रविसंक्रमणं तथा ।।

पुनश्च प्रतिपर्वक्रियमाणत्वादस्य संज्ञा पार्वणमिति । वृद्धवसिष्ठः केवलं पर्वशब्देन श्राद्धमिदं परिस्करोति । यथा-

प्रतिपर्वभवेदस्मात् प्रोच्यते पार्वणं तु तत् ।[19]

तत्रैव - तत्रैव त्रिपुरुषोद्देश्येन स्यादिति नन्दपण्डितः । भविष्यपुराणवचसो व्याख्याने कल्पतरुकारः संक्रान्तिश्राद्धमङ्गीचकारः । यथा-

क्रियते वा पर्वणि इत्यत्र संक्रान्त्यादिपरः ।[20]

अत्रायं सारो यदेतेषां द्वादशविधानां शब्दानां लक्षणानि चन्द्रिकायां बृद्धवसिष्ठवचनोपस्थानपुरःसरमुपन्यस्तानि देवणभट्टेन,कल्पतरौ लक्ष्मीधरः,भविष्यपुराणवचनोपन्यासेन एवमुक्तवान्-

पित्रादित्रयोद्देश्येन विहितं [21]पिण्डत्रययुक्तं पार्वणमिति । तत्रच त्रिविधम्- एकपार्वणम्, द्विपार्वणम्,त्रिपार्वणकम् चेति । तत्र पित्रादिमृततिथौ क्रियमाणं प्रतिसांवत्सरिकमेकं पार्वणम् । अमावास्यादिषण्णवतिश्राद्धानि नित्यश्राद्धानि, महालयान्वष्टक्यभिन्नानि द्विपार्वणकानि,अन्वष्टकाश्राद्धम् । त्रयः सपत्नीकपित्रादित्रयः । सपत्नीकमातामहादीनां कृते द्विपार्वणकश्राद्धं भवति । पुनः त्रिपार्वणकश्राद्धमपि सपत्नीकमातामहादीनां त्रयमिति तेषां कृते भवति । अत्र पार्वणश्राद्धस्य लक्षणं कालमाधवे [22]माधवाचार्येणोक्तं यत्- पर्वण्यमावास्यां यद्विहितं तत् पार्वणम् पुनश्च अस्य स्वरुपं कण्वेन विहितं यथा- त्रीनुद्दिश्य तु यत्तद्धि पार्वणं मुनयोर्विदुः इति स्वरुपस्यानन्तरं तत् कालविषये शातातापेनोक्तम् यथा-

दर्शश्राद्धं तु यत् प्रोक्तं पार्वणं तत् प्रकीर्तितम् ।

अपराह्णे पितृणान्तु तत्प्रदानं विशिष्यते।।

समासेनात्र श्राद्धस्वरूपं किञ्चित्प्रस्तुतम्।

पादटिप्पणी

१.मनु.२.१

२.श्रीदेवयानपत्रिका.पृ.३१

३.वृषो हि भगवान् धर्मः । मनुस्मृ.८.१,महा.शान्ति.३४२.९८

४. चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।

त्रिधा बद्धो वृषभो रवीति महो देवो मर्त्यां आविवेश ।।ऋक्.४.५८.३,यजु.१७.९१

अस्य मन्त्रस्य विशिष्टार्थः मदीयगुरुपादैः पण्डितकुलमणिमिश्रमहोदयैः धर्मशास्त्रशब्दकोषस्य प्रथमख

भूमिकायां प्रकाशितः । पृ.१८.

५ या.स्मृ.पृ-९७

६ श्रा.वि.पृ-६५

७ या.स्मृ.१.मिता.पृ-६७

८कू.पु.२.२०-२६

९ ध.शा.इ.पृ-१२२१

१० ध.सि.पृ-७३७

११ वि.पा.पृ-५९१

१२ नि.सि.पृ.४१५

१३ ध.सि.पृ-७३७

१४ श्रा.वि.पृ-१५०

१५ या.स्मृ.१.९७

१६ श्रा.वि.पृ-६५

१७ या.स्मृ.मि.पृ-९७

१८ स्मृ.च.पृ-७

१९ कृ.क.पृ-८

२० कृ.क.श्रा.पृ.७

२१ ध.सि.पृ-७३७

२२ का.मा.पृ.१२३

ग्रन्थसूची

१. आपस्तम्बधर्मसूत्रम् - चौखम्बा संस्कृत सिरिज् अफिस्, वाराणसी,१९७१.





२. ऋग्वेदसंहिता - चौखम्बा संस्कृत सिरिज् अफिस्, वारणसी, १९९४.

३. गौतमधर्मसूत्रम् - चौखम्बा संस्कृत सीरीज अफिस, वाराणसी, १९६६.

४. चतुर्वर्गचिन्तामणिः - हेमाद्रिभट्टः, चौखम्बा संस्कृत संस्थान,वाराणसी, १९८५

५. धर्मशास्त्र का इतिहास, डा.पी.वी, काणे,अनुवादः-अर्जुनचौवेकाश्यप, उ.प्र.हिन्दीसंस्थानम्,लखनऊ

६. धर्मशास्त्रशब्दकोशः,पं.कुलमणिमिश्रशर्मा,ओडिशाराज्यपर्यटन-क्रीडासंस्कृतिनिर्देशालय, भुवनेश्वरम्,१९८१

७. धर्मशास्त्रस्येतिहास,प्रो.जयकृष्णमिश्रः,चौखम्बासंस्कृत सीरीज अफिस,वाराणसी,२०१०

८. धर्मसिन्धुः , श्रीकाशीनाथ उपाध्यायः, चौखम्बासंस्कृतसीरिज ,वाराणसी-१९६८

९. नारदस्मृतिः , स्मृतिसन्दर्भः,नागप्रकाशक,दिल्ली-७१९८८

१०. पराशरस्मृतिः(माधवीयसहिता) चौखम्बा संस्कृत सीरिज अफिस,वाराणसी ,२०१२

११. मनुस्मृतिः - मन्वर्थमुक्तावलीसहिता, मोतिलालवनारसीदास, वाराणसी, १९९०

१२. याज्ञवल्क्यस्मृतिः - मिताक्षरासंहिता, निर्णयसागरप्रेस्, मुम्बई, १९४९

१३. वसिष्ठधर्मसूत्रम् – तत्त्वप्रकाशिकासहितम्, संपा-विश्वनाथस्वाई, पुरी, २००५.

स्नातकोत्तर - धर्मशास्त्रविभागः,

श्रीजगन्नाथसंस्कृतविश्वविद्यालयः, श्रीविहारः,पुरी,उत्कलाः-३



# विवादपदेषु ऋणादानम्

डॉ. अनिलकुमारदा

(क) विवादपदेषु ऋणादानस्य प्राधान्यम् -

ऋणादानं नाम विवादपदं वैदिककालादारभ्य इदानीं यावत् प्रचलत्येव भारतवर्षे। ऋग्वेदे कथ्य येन प्रकारेण वयम् ऋणं परिशोधयामः तथा भावेन अस्माकं असद्भावनाः दूरीकरणीयाः। धर्मशास्त्रे व्यवहाराध्या "ऋणादानं " प्रथमस्थानम् अधिकरोति। स्मृतिकाराः यथा मनु- नारद- याज्ञवल्क्य-बृहस्पत्यादयः मुन ऋणादानं प्रथमस्थानं प्रददति। अतः विवादपदेषु ऋणादानं मुख्यपदं भवति। "ऋणं सन्नयामसि"इति अथर्ववे लभ्यते। अतः वैदिकयुगे ऋणत्रयस्य महती कल्पना जाता। एवं च देवर्णमं, ऋषिऋणं, पित्रर्णं क्रमश यज्ञाराधनाद्वारा, अध्ययनाध्यापनद्वारा सन्तानोत्पत्तिद्वारा च परिशोधनीयं भवेत्। समाजे एतदतिरि लौकिकऋणस्य आवश्यकता आसीत् यत् समाजे मनुष्यः स्वस्य तथा परिवारस्य भरणपोषणाय असमर्थ सन् उत्तमर्णाय ऋणमकरोत्। अपि च जनः स्वस्यामोदप्रमोदाय ऋणं करोति स्म। वैदिककालादनन्तर ऋणादानस्य प्रचलनं बहुलमात्रायां जातम्। ततः ऋणग्रहीता ऋणं नीत्वा ऋणस्य परिशोधने विलम्बः कृतः उ परिशोधं न कृतः। तदा उत्तमर्णाधमर्णयोः मध्ये विवादः भूत्वा समाजे विशृङ्खला जाता। अतः मुनयः विद्वांस बहून् नियमान् प्रणीतवन्तः। ऋणादान-व्यवहारविषये उक्तं नारदेन-[२]

ऋणं देयमदेयं च येन यत्र यथा च यत्।
दानग्रहणधर्माश्च ऋणादानमिति स्मृतम्।।

लौकिकऋणस्य आदानप्रदानस्य एका परम्परा प्रचलत्येव। मुनिकृतऋणादानविध्यनुसारेण पुत्रः स्वस पूर्वपुरुषाणाम् आध्यात्मिकंलौकिकं ऋणं च परिशोधयितुम् उत्तरदायी भवति। अतः अस्मिन् ऋणादा बहुविवादसंघटितत्वात् व्यवहाराध्याये विवादपदेषु एतत् मुख्यस्थानमधिकरोति।

(ख) ऋणादानस्य भेदाः

भारतीयधर्मशास्त्रे अष्टादशविवादपदेषु ऋणादानमिति विवादपदमन्यतमं भवति। तत्र केन प्रकारे ऋणं दातव्यमिति विषये विभिन्नाः स्मृतिकाराः स्वस्वमतं प्रतिपादितवन्तः। तेषु स्मृतिकारेषु प्रथमतः नारदे कीदृशमृणादानं स्यात् इत्यस्मिन् विषये स्वमतं प्रतिपादयता कथितं यत् ऋणादानं सप्तविधमिति। अधम पञ्चविधं यथा- ईदृशमृणं देयम्, ईदृशमृणमदेयम्, अनेनाधिकारिणा देयम्, अस्मिन् समये देयम्, अने प्रकारेण देयञ्चेति। उत्तमर्णे द्विविधं यथा -दानविधिः, आदानविधिश्च। तदुक्तं यथा नारदेन[३] –

ऋणं देयमदेयं च येन यत्र यथा च यत्।
दानग्रहणधर्माभ्यामृणादानमिति स्मृतम्।।

अधमर्णस्य कृते यत् पञ्चविधं भवति तेषु प्रथमं यत्- ईदृशमृणं देयमित्याकांक्षायामुच्यते यत् अधमर्ण





उत्तमर्णतः कीदृशमृणं गृहीतं तदेव देयमिति। अत्र स्मृतिकारा निबन्धकाराश्च स्वं स्वमाशयं प्रतिपादितवन्तः यत्- संयुक्ते परिवारे एकीभूय तिष्ठन् यदा एकेन अनेकैर्मिलित्वा वा ऋणं गृह्यते तर्हि तस्य ऋणग्रहीतुः मरणादनन्तरं तस्यैव उत्तराधिकारिणः उत्तमर्णस्य तदृणं परिशोधेयुः। यथाह याज्ञवल्क्यः [४] -

अविभक्तैः कुटुम्बार्थे यदृणं तु कृतं भवेत्।
दद्युस्तद्रिक्थिनः प्रेते प्रोषिते वा कुटुम्बिनि।।

मनुनाऽपि प्रकटितं यत् ऋणी चेत् म्रियते यदा तदा तत्र तदेव ऋणं विभक्ताविभक्तपरिवारस्य जनाः उत्तमर्णं प्रतिदद्युः। यथोक्तं मनुना [५]-

ग्रहीता यदि नष्टः स्यात्कुटुम्बार्थे कृतो व्ययः।
दातव्यं बान्धवैस्तत्स्यात्प्रविभक्तैरपि स्वतः।।

मनुनापि कथितं यत् यदि गृहस्वामी देशे विदेशे वा स्थित्वा तस्याध्यधीनः सेवकः कुटुम्बभरणपोषणाय ऋणं करोति चेत् तत् स्वामिना उत्तमर्णे अवश्यं परिशोध्यम्। यथाह तेन [६] -

कुटुम्बार्थेऽध्यधीनोपि व्यवहारं यमाचरेत्।
स्वदेशे वा विदेशे वा तं ज्यायान्न विचालयेत्।। इति ।

याज्ञवल्क्येन प्रतिपादितं यत् यदि स्त्रियोऽपि कुटुम्बार्थं ऋणं कुर्वन्ति तर्हि तासां भर्तारः अवश्यमेव तदेव ऋणं धनं दद्युः इति । गोपाल-सुपकार-नट-रजक-व्याधानां स्त्रियः चेत् ऋणं कुर्वन्ति तर्हि तासां भर्तारः एव तदेव ऋणं धनं दद्युः । यतः "यस्माद्वृत्तिस्तदाश्रया" वचनानुसारेण तेषां जीवनवृत्तिः स्त्रीणामधीना भवति। यथोक्तं तेन [७] -

गोपशौण्डिकशैलूषरजकव्याधयोषिताम्।
ऋणं दद्यात्पतिस्तेषां यस्माद्वृत्तिस्तदाश्रया।। इति ।

पुनश्च याज्ञवल्क्येन कदा स्त्रियः पतिऋणं दद्युः इति विषये प्रतिपादितं यत् यदि पतिः ऋणं कृत्वा मृतो, विदेशं गच्छति वा पुनश्च पत्या सह कृतम् ऋणं स्वयं कृतमृणं वा दद्यात्। परन्तु सुरापानार्थं वृथादानार्थं वा पत्या कृतं पत्न्या सह कृतमपि वा ऋणं न स्त्रिया देयमिति। यथोक्तम् [८]-

प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत्कृतम्।
स्वयं कृतं वा यदृणं नान्यत्स्त्री दातुमर्हति ।। इति ।

पुनश्च तेन उक्तं यत् पिता यदि ऋणं कृत्वा प्रेतो भवति अथवा दूरदेशं गच्छति असाध्यरोगपीडितो भवति वा तत्र तेन कृतमृणं तस्य पुत्राः पौत्राश्च दद्युः । यदि पुत्राः पौत्राः तत् न प्रयच्छन्ति तर्हि तत्र साक्ष्यलेख्यादिप्रमाणद्वारा तत् ऋणं देयमिति। यथाहं [९]-

पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेऽपि वा।
पुत्रपौत्रैर्ऋणं देयं निह्नवे साक्षिभावितम्।। इति ।

एवं प्रकारेण धर्मशास्त्रे विवादपदेषु ऋणादानप्राधान्यं वर्त्तते इति ।


सन्दर्भाः -

१. अथर्ववेदः ६/११७/३ । २. नारदस्मृतिः १/१ ।
३. नारदस्मृतिः १/१ । ४. याज्ञवल्क्यस्मृति २/४५ ।
५. मनुस्मृतिः ८/१६६ । ६. तत्रैव ८/१६७ ।
७. याज्ञवल्क्यस्मृतिः २/४८ । ८. याज्ञवल्क्यस्मृतिः २/४९ ।
९. याज्ञवल्क्यस्मृतिः २/५० ।



अतिथि-अध्यापकः
धर्मशास्त्रविभागः, श्रीजगन्नाथसंस्कृतविश्वविद्यालयः, श्री विहारः।








# गुरुकुले ब्रह्मचारीधर्मः

डॉ. शशिभूषणसेनापतिः

उपक्रमः-

प्राचीनभारते मुनयः आश्रमं निर्मीय वने अवसत् । तत्र ध्यानं तपस्यां च अकुर्वन् । तर्कवितर्कदर्शनशास्त्रादीनां च समालोचना अभवत् । क्रमशः जनाः एतद् ज्ञात्वा स्वपुत्रान् वेदाध्ययनाय तत्र प्रेषितवन्तः। शिष्याः वेदाध्ययनेन सह अन्याः विद्याः अधीतवन्तः। वनं शनैः शनैः जनानां साधूनाञ्चाश्रयस्थलीरूपेण परिगणितं जातम्। सर्वेषां दृष्ट्या तत् स्थानमाश्रम इति नाम्ना अभिधीयते।

धर्मशास्त्रानुसारमाश्रमः चतुर्विधः। यथा- ब्रह्मचर्यः, गृहस्थः, वानप्रस्थः, सन्यासश्च । व्यक्तेः आयुः एकशतमिति अवधार्य आश्रमव्यवस्थासु आश्रमस्य विभागचतुष्टयं कृतमस्ति ।

यथा - १. ०-२५वर्षाणि ब्रह्मचर्याश्रमः।
२. २६-५०वर्षाणि गृहस्थाश्रमः।
३. ५१-७५वर्षाणि वानप्रस्थाश्रमः।
४. ७६-१००वर्षाणि सन्यासाश्रमः।

ब्रह्मचर्याश्रमः -

आश्रमस्य प्रथमसोपानं भवति ब्रह्मचर्याश्रमः। शरीर-मन-बुद्धेः च विकासः आश्रमेऽस्मिन् भवति। जन्मतः पञ्चविंशतिवर्षाणि यावत् अयमाश्रमः प्रचलति ।

ब्रह्मचर्याश्रमे शिक्षाव्यवस्था -

उपनयनसंस्कारादनन्तरम् अष्टमवयसि ब्रह्मचर्यशिक्षा शिष्येभ्यः प्रदीयते । तदा ज्ञानार्जनार्थं ते शिष्याः गुरुकूले तिष्ठन्ति। तत्र च ते नित्यस्नान-पितृतर्पण-देवार्चन-प्राणायाम-गायत्रीजप-समीदाधान-भिक्षाटनादि नित्यनैमितिककार्याणि सम्पादयन्ति। तैलादिलेपन-कज्जलधारण-विषयाभिलाष-परनिन्दा-क्रोध-लोभ-गीत-वाद्य-मांसादिकं च वर्जयन्ति । अतः लिखितमस्ति याज्ञवल्क्यस्मृतौ -

मधुमांसाञ्जनोच्छिष्टशुक्तस्त्रीप्राणिहिंसनम्
भास्करालोकनाश्लीलपरिवादि वर्जयेत् ।।

एवं स्वाध्यायप्रवचनाभ्यां कृतोपनीतो द्विजो गुरुगृहे उषित्वा चतुर्दशविद्याः अधीत्य गुरवे यथाविधिदक्षिणां प्रदाय गृहं प्रतिनिवृत्तो भवति। आगमनावसरे मातृदेवो भव । पितृदेवो भव। अचार्यदेवो भव। अतिथिदेवो भव । स्वाध्यायान्मा प्रवर्तितव्यम् चेत्यादिदिक्षां प्राप्नोति ।

ब्रह्मचर्याश्रमे वर्णानां धर्मः-

आश्रमेऽस्मिन् जातकर्म-नामकरण-उपनयन-समावर्तनसंस्कारैः ब्राह्मणादीनां शरीरं

सांसारिकाध्यात्मिकदृष्ट्या पवित्री क्रियते । परन्तु एतेषां वर्णानां संस्कारविधिकालादय: भिन्ना: भवन्ति। नामकरणसंस्कारविषये उक्तमस्ति यत्-

माङ्गल्यं ब्राह्मणस्य स्यात् क्षत्रियस्य बलान्वितम्
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ।
शर्मवद् ब्राह्मणस्यस्यात् राज्ञो रक्षा समन्वितम्
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रेष्यसंयुतम् ।।

ब्राह्मणबालकस्य उपनयनसंस्कार गर्भादष्टमे वर्षे , क्षत्रियस्य एकादशे वर्षे , वैश्यस्य च द्वादशे वर्षे करणीय:। गौणरूपेण तु ब्राह्मणस्य आषोडशात्, क्षत्रियस्य आद्वाविंशात्, वैश्यस्य आचतुर्विंशते: यज्ञोपवितसंस्कार: नाति वर्तते । यदि अत: ऊर्ध्वं स्यात् तर्हि एते वर्णा: गायत्रिजपं कर्तुं नार्हा:। आर्या: तं ब्रात्या इति कथयन्ति ।

ब्रह्मचर्याश्रमे भिक्षाटनव्यवस्था-

धर्मशास्त्रे ब्रह्मचर्याश्रमे भिक्षाटनव्यवस्थाविषये श्लोके लिखितमस्ति-

भवत्पूर्वं चरेद् भैक्षमुपनीतो द्विजोत्तम:
भवेन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम् ।।

अर्थात् ब्राह्मणब्रह्मचारी उपनयनकाले भवत् इति शब्दस्य पूर्वमुच्चारणं कुर्यात् । यथा-भवति ! भिक्षां देहीति । क्षत्रिय: मध्यकाले, यथा-भिक्षां भवति ! देहि। वैश्य: उत्तरकाले यथा-भिक्षां देहि भवति ! इति वदेत् ।

आचमनविधि:-

हृद्गाभि: पूयते विप्र: कण्ठगाभिस्तु भूमिप:
वैश्योऽद्भिस्तु शुद्र: स्पृष्टाभिरनन्त:।।

अर्थात् आचमनसमये शुद्धजलं यदा ब्राह्मणस्य हृदयं यावत् गच्छति तदा स: पवित्रो भवति, तथैव वैश्यस्य मुखं यदा जलं गच्छति तदा स: पवित्रो भवति।

केशान्तसंस्कार:-

केशान्तसंस्कार: ब्राह्मणस्य षोडशे वर्षे विधीयते ।
राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके मत:।।

अर्थात् षोडशे वर्षे ब्राह्मणस्य, क्षत्रियस्य वैश्यस्य च चतुर्विंशे वर्षे केशान्तसंस्कार: करणीय:।

एवं प्रकारेण ब्राह्मण-क्षत्रिय- वैश्यवर्णीया: ब्रह्मचारिण: ब्रह्मचर्याश्रमे गुरुकुले स्थित्वा गुरुशुश्रूषापूर्वकं मधुमांसगन्धमाल्यादि वर्जनपुरस्सरं नित्यसन्ध्योपासनारता: सन्त: विद्याभ्यासपूर्वकं जीवनं निर्वाहयेयु:। शूद्राणां कृते तु आश्रमप्रवेश: निषेध: कृत:। आश्रमे ब्राह्मणा: वेदाभ्यासेन सह





यज्ञादीनामभ्यासं युद्धविद्यां वैश्याश्च वाणिज्यविद्यां शिल्पविद्यां च शिक्षेरन् ।

ब्रह्मचर्याश्रमे ब्रह्मचारिण: परिधानम्-

कार्ष्णरौरववास्तानि चर्माणि ब्रह्मचारिण: ।
वसीरन्नानुपूर्व्येण शाणक्षौमविकानि च।।
मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला ।
क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्वती।।
मुञ्जलाभे तु कर्तव्या: कुशाश्मन्तकबल्वजै:।
त्रिवृता ग्रन्थिनैकेन त्रिभि: पञ्चभिरेव वा ।।
कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत्।
शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम्।।
ब्राह्मणवैल्वपालाशौ क्षत्रयो वाटखादिरौ।
पैलवौदुम्बरौ वैश्यो दण्डानर्हन्ति धर्मत:।।
केशान्तिको ब्राह्मणस्य दण्ड: कार्य: प्रमाणत: ।
ललाटसंमितो राज्ञ: स्यात्तु नासान्तिको विश:।।
ऋजवस्ते तु सर्वे स्युरव्रणा: सौम्यदर्शना: ।
अनुद्वेगकरा नृणां सत्वचोऽग्निदूषिता:।।

अर्थात् ब्राह्मणब्रह्मचारिण: वस्त्रं कृष्णमृगचर्मनिर्मितं,क्षत्रियस्य रुरुमृगचर्मनिर्मितं,वैश्यस्य च अजचर्मनिर्मितं भवेत्।

ब्राह्मणस्य यज्ञोपवीतं कार्पाससूत्रनिर्मितं ,क्षत्रियस्य शणसूत्रमयं ,वैश्यस्य च मेषलोमनिर्मितं स्यात् । ब्राह्मण: पलाशदण्डं बैल्वदण्डं वा धारयेत्। क्षत्रिय: वटखादिरौ, वैश्यश्च पीलुवृक्षौदुम्बरदण्डौ च धर्मत: धारयेत्।

ब्रह्मचर्याश्रमादनन्तरं गृहस्थाश्रमे ।समावर्त्तनसंस्कारादनन्तरं ब्राह्मणादिवर्णा: गुरुकुलात् प्रत्यावर्तनं कुर्वन्ति । तदा ते विवाहसंस्कारेण संस्कारिता: सन्त: गृहस्थाश्रमे प्रविशन्ति । तदर्थं नियम: मनुस्मृतौ निर्धारित: । यथा -

गुरुणानुमत: स्नात्वा समावृत्तो यथाविधि: ।
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम् ।।

विवाहार्थं नियमा: -

शूद्रैव भार्या शूद्रस्य सा च स्वा च विश: स्मृते ।
ते च स्वा चैव राज्ञश्च स्वा चाऽग्रजन्मन: ।।

न ब्राह्मणक्षत्रिययोरापद्यपि हि तिष्ठतोः ।
कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्योपदिश्यते।।

अर्थात् ब्राह्मण-क्षत्रिय-वैश्य-शूद्राः स्वजातीयकन्यया सह विवाहं कुर्युः । तदतिरिक्तं ब्राह्मणः क्षत्रि… वैश्य-शूद्राणां कन्यया सह, क्षत्रियः वैश्य-शूद्राणां कन्यया सह, वैश्यः शूद्राणां कन्यया सह विवाहं क… शक्यते । परन्तु शूद्रः स्वजातीयकन्यया सह एव विवाहं कुर्यात् । ब्राह्मणादिवर्णानां कृते स्ववर्णभिन्नकन्… सह विवाहार्थमनुमतिः दत्ताऽस्ति, तथाऽपि शूद्रकन्या संकटकालेऽपि न ग्रहणीया इति नियमो विहितः ।

सन्दर्भग्रन्थसूची-
१.मनुस्मृतिः,चौखम्बाप्रकाशनम् , उमेशचन्द्रपाण्डेयः ।
२.याज्ञवल्क्यस्मृतिः,चौखम्बाप्रकाशनम् , उमेशचन्द्रपाण्डेयः।

संस्कृतस्नातकाध्याप…
केन्द्रीयविद्यालयः, पु…







## दायसारकर्तुः महेशठक्कुरस्यात्मलब्धिः

सोनालिसाहुः

ख्रीष्टपूर्व १५ शताब्द्याः अन्तिमभागे खण्डवलाकुलमहोदध्यां सकलकलाप्रवीणः ठक्कुरोपाधिधारी "चन्दपति" नामकस्य महापुरुषस्य उद्भवोऽभवत्। अस्य किरणरूपः सकलः निजगुणगुणानुरूपः चत्वारः सुपुत्राः जाताः। म.म. महादेवठक्कुरः प्रसिद्धः थेघः ठक्कुरः, म.म. भागीरथठक्कुरः प्रसिद्धः मेघः ठक्कुरः, म.म.अग्निहोतृकदामोदरठक्कुरः, तथा म.म. स्वनामधन्यराजकुलमूदद्धन्य-महीमण्डलमान्य-धर्मधुरन्धर-मिथिलाराज्योपार्जकमहेशठक्कुरः।

चन्द्रपतिठक्कुरस्य सर्वप्रथमपुत्रः महादेवप्रसिद्धथेघठक्कुरः संसारं तुच्छं विचिन्त्य फकीरवेशं धारयित्वा "गाढ" नामक राजधानीतः साधुमहात्मभिः सह अन्यत्र अगच्छत्। अस्य प्रणीतः कोऽपि ग्रन्थः अद्य पर्यन्तं न उपलब्धः तथा अस्य सन्ततानां परिचयोऽपि कस्मिन् प्रबन्धे न दृश्यते।

म.म.भगीरथठक्कुरः प्रसिद्धमेघठक्कुरः जगद्गुरूउदयनाचार्य्यकृत-"न्यायकुसुमाञ्जलि" नाम्नः ग्रन्थस्योपरि, म.म. रुचिदत्तोपाध्यायस्य "मकरान्दः" नाम्नटीकायाः उपरि, म.म. वर्द्धमान-विरचित "प्रकाशः" व्याख्यायाः उपरि "जलद" नाम्नी टीकात्रयं अलिखत्।[१]

म.म. अग्निहोतृकदामोदरठक्कुरः "सजातो येन जातेन याति वंशः समुन्नतिम्" इदं वाक्यं आदर्शरूपेण परिणतं कृत्वा नित्यहवनं कृत्वा विद्याभ्यासे सततनिमग्नोऽभुत्। एकस्मिन् समये स्वस्य पूर्वज-"साँइ"-प्रसिद्धसङ्कर्षणठक्कुरस्य अर्जित-"खण्डवला"-ग्रामस्य अन्वेषणार्थं भातृवर्गैः सह देशान्तरे शास्त्रविचारद्वारा पूर्णप्रतिष्ठालाभं कृत्वा सनातनधर्मस्थापनार्थं शुभमुहूर्त्ते भौरग्रामात् बहि आगत्य "गाढा" नाम्नीं राजधानीम् प्राप्तः। तत्रस्थराजा तेषां कृते बहुसम्मानपुरष्कारं आश्रयादिकम् दत्तवान्। तत्र किञ्चित् दिनं स्थित्वा गाढाधिपतिमहाराजसंग्रामसाहस्य राजसभायाम् उपस्थितोऽभवत्। अस्य अलौकिकप्रतिभायां तथा पाण्डित्ये प्रसन्नो भूत्वा गाढाधिपतिमहाराजः प्रधानपण्डितपदे नियुक्तिं कृत्वा सम्मानितं कृतवान्। उक्त महाराजस्य आदेशेन बहुधर्मशास्त्रादिग्रन्थाः निर्मिताः। एतेषु प्रथमग्रन्थः भवति "विवेकदीपकः"।

म.म. दामोदरठक्कुरस्य उत्कृष्टपाण्डित्यविषये म.म.मुकुन्दझा स्वनिर्मित-'खण्डवलाकुलप्रशस्ति' रित्यत्र लिख्यते -

कनीयानस्याभूद्विबुधगुणमान्योथ विदुषा-
म्प्रतिष्ठादिग्रन्थानकृत जनतोद्धारणकृते ।
विपक्षानक्ष्णायोऽदहद्तुल्यवैदुष्यभरतो-
जनैःख्यातो दामोदरपदलसत्यत्नमुनिवत् ।।

विश्वकोषे ४८२पत्रे लिखितमस्ति-दामोदरठक्कुरः "विवेकदीपकः" नाम धर्मशास्त्रसंग्रहकारः तथा

उक्त विश्वकोषे अन्यत्र वर्णनमस्ति दामोदरठक्कुरः स्मार्त्तपण्डितसंग्रामसाहेरस्य राजत्वकाले "दिव्यनिर्णय" रचनां कृतवान्।

म.म. महेशठक्कुरः –

गङ्गौली(दरभङ्गा)निवासी श्रोत्रियवंशीयगङ्गाधरशर्मणः वंशे उत्पन्नचन्द्रपतिठक्कुरस्य चतुर्षु पुत्रेषु महेशठक्कुरः भवति अन्यतमः। यः महेशठक्कुरः मधुबनीजिल्लायाः भौरग्रामस्य निवासी आसीत्। यः एकः समहानविद्वान् आसीत्। यः मूलतः दार्शनिक एवं धर्मशास्त्रज्ञः आसीत् । इतोपि तस्य साहित्ये ज्योतिषे अपि प्रगाढरुचि आसीत्।

महिषीपालीवंशसभूतशिवस्यैकः पुत्रः दामस्यैका पुत्री एवं महेशठक्कुरस्य चत्वारः पुत्राः जाताः रामचन्द्रठक्कुर-गोपालठक्कुर–अच्युतठक्कुर-धर्मकर्मावताररार्जर्षीपरमानन्दठक्कुरः। पालीवंशसंभूतरघुपतेः पुत्रः रत्नपतेः पुत्रीतः एकः सन्तानः जातः। तस्य नाम महाराजशुभङ्करठक्कुरः। पालीवंशसंभूतलाह्वयाः पुत्रः थेघस्य पुत्रीतः मानिकमथुरा नामकौ द्वौ पुत्रौ जातौ । हरिऽम्बयवंशसंभूतगणेशस्य पुत्रीतः कोऽपि पुत्रः पुत्री वा न जाता। वलियासयवंशसंभूतरञ्जनस्य पुत्रीतः काऽपि सन्ततिः न जाता।

महाराजकंसनारायणानन्तरं ९वर्षाणि यावत् मिथिलादेशः अराजक आसीत्। तदनन्तरं म.म. महेशठक्कुरः मिथिलाराज्ये स्व आधिपत्यविस्तारं कृतवान्। इदं राज्यं अद्यपर्यन्तं खण्डवलाकुले अविच्छिन्नरूपेण अस्ति। अनेकेषां मतं भवति उक्तखण्डवलाग्राममध्यप्रदेशे खण्ड्वा नाम्नि अतिप्रसिद्ध-रेलपथगामिनीशकटस्थानं भवति। श्रीकण्ठठक्कुरस्य पुत्र गङ्गेश्वरठक्कुरः अस्य सुतः चक्रेश्वरठक्कुरः, अस्य सुतः पद्मनाभठक्कुरः, अस्य सुतः पुरुषोत्तमठक्कुरः, अस्य सुतः ज्ञानपतिठक्कुरः, अस्य सुतः सुरपतिठक्कुरः, अस्य सुतः दूबे प्रसिद्धश्रीपतिठक्कुरः महेशठक्कुरस्य वंशे अन्तर्भुक्ता भवन्ति। प्रसिद्धश्रीपतिठक्कुरस्य त्रय पुत्राः आसन्- १ हरपतिः, २ नरपतिः, ठक्कुरचन्द्रपतिः। ठक्कुरचन्द्रपतेः चत्वारपुत्राः आसन्। म.म. महादेवठक्कुरः, प्रसिद्धः थेघठक्कुरः, म.म.दामोदरठक्कुरः, तथा म.म.मिथिलाराज्योपार्जकमहेशठक्कुरः। विंशतिवर्षे जयदेवपण्डितः पक्षधरमिश्रतः न्यायशास्त्रमधित्य पारङ्गतमभवत्। अस्य एकस्मिन् ग्रन्थे श्लोकः वर्तते।

विंशाब्दे जयदेवपण्डितकवेस्तर्काब्दिपारङ्गतः ।<br>
श्रीमानेष भगीरथः समजनि श्रीचन्द्रपत्यात्मजः ।।<br>
श्रीधीरातनयेन तेन रचिता श्रीमन्महेशाग्रजः ।<br>
श्रीदामोदरपूर्वजेन जयतादाचन्दमेषां कृतिः ।।

सम्राट् अकबरस्य दरवारे एकः महान् विद्वान् आसीत्। यः अरबी-फारसी-संस्कृतमर्मज्ञः आसीत्। काऽपि व्यक्तिः तं जेतुम् समर्थो नासीत्। तदर्थं वीरबलः निश्चितो अभवत् हिन्दुमध्ये कोऽपि महान् संस्कृतज्ञः नासीत् यः मुल्लां पराजितं कर्तुमर्हति। तदानीम् एव अकबरः महेशठक्कुरविषये सन्देशं प्राप्तवान्। अकबरः बादशाहं प्रति उक्त्वा महेशठक्कुरं स्वस्य दरवारं प्रति आमन्त्रणं कृतवान्। बादशाहः उद्घोषितवान् यदि





महेशठक्कुरः मुल्लां पराजितं कर्तुं समर्थो भवति तर्हि तस्य कृते मिथिलायाः राज्यम् अर्पणं क्रियते। महेशठक्कुरः स्वस्य कुलदेव्याः शास्त्राविहितपुजां कृत्वा साहिदरवारं गत्वा भगवतः कृपया मुल्लां पराजित्य मिथिलायाः राज्यं प्राप्तवान्। तस्मिन् समये मिथिलायाः राज्यं ब्राह्मणानां राज्यमासीत्। पुनः यः महेशठक्कुरः एकस्थानं चयनं कृत्वा अस्य नाम "महेशपट्टी" इति स्थापितम्। यत् स्थानम् अनन्तरं "भौर" नाम्ना प्रसिद्धमभवत्। कालान्तरे यः भौरग्रामः राजग्रामः नाम्ना परिचितोऽभवत् कारणं महेशठक्कुरः स्वस्य विद्याबलेन मिथिलायाः राज्यं प्राप्तवान्। यदा वादशाहः महेशठक्कुरं प्रति पुरष्काररूपेण अराजकमिथिलां दत्तवान् तदानीम् एव महेशठक्कुरः राजा अभवत्। तत् प्राक् कोऽपि ब्राह्मणराजा नासीत्। अस्य मूलं गङ्गोलीवार आसीत्। यः शाण्डिल्यगोत्रे आगच्छति। अस्य वंशस्य ऊरूत झा आसीत्। परन्तु संकर्षणझा मध्यप्रदेशस्य खण्ड्वा नामकग्रामस्योपार्जनं कृतवान्। अनेन कारणेन संकर्षणझां जनाः ठक्कुरसाहेवः अकथयत्। अनन्तरं अस्य सन्ततेः ऊरूत अपि ठक्कुरः अभवत्। खण्ड्वाग्रामः उपार्जनकारणेन अस्य मूल(गङ्गोलीवार) रूपेण परिवर्तितभूत्वा खण्डवला(खण्डवावाला) अर्थात् खण्डरीय अभवत्। यः अद्यापि प्रचलितमासीत्।

यदा मिथिलावासिनः ज्ञातवन्तः म.म. महेशठक्कुरः शास्त्रार्थे विजयलाभं कृत्वा मिथिलाराज्यं प्राप्तवान् तदा ते जनाः आनन्दिता भूत्वा बहु-आडम्बरेण म.म. महेशठक्कुरस्य स्वागतं कृतवन्तः।यः स्वस्य समये स्वराज्ये पण्डितपरीक्षायाः प्रारम्भं कृतवान्। यः परीक्षोत्तीर्णो भवति तस्य कृते धौतवस्त्रं प्रदीयते एवं च तस्य वहु सम्मानं क्रियते।

महामहोपाध्यायमहेशठक्कुरविरचितग्रन्थाः भवन्ति –तिथितत्त्वचिन्तामणिः, अतीचारादिनिर्णयः, शुद्धिप्रकाशः, प्रायश्चितप्रकाशः, अधिमासप्रकासः, दायसारादि। दायसारग्रन्थस्य वैशिष्ट्यं धर्मशास्त्रजगति अभूतपूर्व विद्यते। धर्मशास्त्रे मलमासनिर्णयमपि अनेन विरचितम्। अनेन क्रियमाणः "अकबर" नाम्नी प्रतिलिपिः दरभङ्गायाः राज्यलाइब्रेरीमध्ये समुपलब्धाः। महेशठक्कुरगङ्गेशकृततत्त्वचिन्तामणिग्रन्थस्योपरि पक्षधरमिश्रेण लिखितआलोकटीकायामुपरि दर्पणनामकटीकां रचितवान्। अत्र लिख्यते यत् -

गौर्या गिरीशदिव कार्त्तिकियो यो धीरया चन्द्रपतेरलम्भि ।<br>
आलोकमुद्दीपयितुं नवीनं सदर्पणं व्यातनुते महेशः ।।<br>
विधाय बिदुषां प्रीत्यै प्रत्यक्षालोकदर्पणम् ।<br>
श्रीगोपाले महेशेन तस्याकारि समर्पणम् ।।

शुद्धिप्रकाशः -

अस्मिन् ग्रन्थे साधारणमशौचम्, सद्यशौचम्, सपिण्डाद्यशौचम्, निराहाराद्यशौचम्, विदेशाशौचम्, विदेशस्थ अशौचम् एते विषयाः शुद्धिप्रकाशे विवेचिताः।

प्रायश्चितप्रकाशः –

अस्मिन् पुस्तके निम्नलिखितविषया: विवेचिता: सन्ति। सामान्यप्रायश्चितम्, प्रायश्चि
पर्षदुपस्थापनम्, प्रायश्चितदानफलम्, महापातकसामान्यप्रायश्चितम्, ब्रह्मवद्धप्रायश्चितम्, निमित्तवद्धनि
प्रायश्चितभेदा:, सुरापानं, सुवर्णस्तेयप्रायश्चितम्, महापातकीसंसर्गप्रायं, अनुपातकं, उपपात
अभक्ष्भक्षणप्रायश्चितम्, पतितान्नभक्षणम्, चाण्डालपतितस्पृष्टान्नप्रायश्चितम्, कापालिकअन्नभक्षणप्रायश्चि
वृथामांसभक्षणप्रायश्चितम्, सूतकमृतकान्नभक्षणप्रायश्चितम् इत्यादिविषयामाहत्य पञ्चाशत् विषया ग्रन्थेस्मि
निरुपिता: सन्ति।

तिथितत्त्वचिन्तामणि -

अस्मिन् ग्रन्थे चत्वारिंशत् विषया वर्त्तन्ते। तत्र तिथिग्रहणविचार:, अरुणोदयपरिभाषा, योग्यकालोकि
वेधव्यवस्था, मुहूर्त्तविध:, कर्कसंक्रान्तौ पूण्यकाल:, द्वितीयानिर्णयम् एवं हि तृतीयात: पुर्णिमा आमावास्य
प्रत्येकस्य एकैकस्य निर्णयं, जन्माष्टमीनिर्णयं, सामान्यतिथिनिर्णयं, भाद्रशुक्लपञ्चमीनिर्णयं, अनन्तव्रतनिर्ण
त्रयोदशीनिर्णयं, अन्वष्टकाश्राद्धनिर्णयं, मासकृतिनिर्णयं (प्रत्येकमासस्य पृथक् पृथक् निर्णयं), शिवरात्रि
मासस्नानं, रामनवमीनिर्णयं, निर्जलाएकादशी इत्यादि विषया: वर्णिता: सन्ति।

अतिचारादिनिर्णयम् –

अस्मिन् पुस्तके अतिचारस्य निर्णय: वर्णित:, तत्र तारापात:, रजसंहतिहेतौ संध्याराग:, रवे: वर्णप्रमाणे
हेतो: एते विषया: निरूपिता: सन्ति।

१२ वर्षाणि यावत् समुचितरूपेण सुप्रवन्धेन राज्यशासनं कृत्वा १५६८इ. तमे वर्षे स्वस्य द्वितीयपु
गोपालठक्कुरं च राज्यभारं समर्प्य काशीं गत्वा अन्तिमसमयं विश्वनाथस्य चरणे कालं यापितवान्। अन्ति
'काशीमरणान्मुक्तिं' प्राप्ता।

शोधच्छा
धर्मशास्त्रविभा
श्रीसदाशिवपरिसर, पु







## प्राचीनब्रह्मचर्यधर्मस्य साम्प्रतिकब्रह्मचारिधर्मोपरि प्रभाव:

शिवशङ्करवेहेरा
शोधछात्र:

'शतायुर्वै पुरुष:' इति वेदे प्रतिपादितं मनुष्यस्य आयु: एतदर्थं धर्मशास्त्रे चतुराश्रमव्यवस्था प्रतिपादिता अस्ति । तस्मात् प्रत्येकाश्रमस्य कृते पञ्चविंशतिवर्षाणि निरुपितानि सन्ति । ते च चत्वार आश्रमा: यथा- ब्रह्मचर्याश्रम:, गृहस्थाश्रम:, वानप्रस्थाश्रम:, संन्यासाश्रमश्चेति । जन्मप्रभृतिपञ्चविंशतिवर्षाणि यावत् ब्रह्मचर्य पञ्चविंशतिवर्षेभ्य: पञ्चाशद्वर्षं यावत् गृहस्थाश्रमस्य काल:, पञ्चाशद्वर्षेभ्य: पञ्चसप्ततिवर्षं यावत् वानप्रस्थाश्रमस्य काल: । तत: मरणं यावत् सन्यासाश्रमस्य काल: भवति ।

धर्मशास्त्रे धर्ममाधारीकृत्य धर्मादीनां पुरुषार्थाणां प्राप्ति: प्रतिपादिता । तत्रापि आश्रमेषु ब्रह्मचर्याश्रमस्य अतिशयमहत्वं धर्मशास्त्रे निगदितम् । ब्रह्मचारी किमिति प्रश्ने ब्रह्मशब्देन वेद: वीर्यम् ईश्वरश्चावगम्यते । ब्रह्मणि चरतीति ब्रह्मचारीत्युक्ते वेदाध्येतेत्युच्यते । अर्थात् शरीरस्थशुक्रधातुनां शुक्राणुनामविकृति: अतिचलितमवस्थायां धारणमेव ब्रह्मचर्यम् । अर्थात् कायमनोवाकद्वारा मनोनिवेशपूर्वकम् इन्द्रियाणि वशीकृत्य वेदाध्यायने मनोनिवेशं करोति, बीर्यस्य स्खलनं न करोति, तर्हि विजितेन्द्रिय: सन् ईश्वरप्राप्तये मार्गं प्रशस्तं करोति । तथा च याज्ञवल्क्य:[१]

यज्ञानां तपसां चैव शुभानां चैव कर्मणाम् ।
वेद एव द्विजातीनां नि:श्रेयसकर: पर: ।।

अथ च ब्रह्मचर्याश्रम: यत्र ब्रह्मचारिणां वेदाध्ययनं जीवनयापनं गुरुगृहे निवासप्रकारं सूचयति ।ब्राह्मण-क्षत्रिय-वैश्या: यथाकालम् उपनयनसंस्कारेण संस्कृता: सन्त गुरुगृहं प्रति गच्छन्ति तदा ते द्विजातय: कथ्यन्ते । तम् एव द्विजातय: गुरुसमीपे स्थित्वा वेदं वेदौ वेदान् वा पठन्ति । प्रतिवेदं द्वादशवार्षिकम् अनुचर्यम् । द्विजातिब्रह्मचारी प्रात: उत्थाय शौचादिकं कर्म परिसमाप्य पूर्वं सन्ध्यां कुर्यात् । तत: कुश-पुष्प-समिध-वारि-संग्रहनिमित्तं अरण्यं गच्छेत् । एतानि वस्तूनि संगृह्य गुरु: आश्रमे आग्निं संस्थाप्य वेदाध्यायनमारम्भेत् । अध्ययनं समाप्य भिक्षार्थं ग्रामं प्रविशेत् । भिक्षाग्रहणकाले ब्रह्मचारी भवत् शब्दोच्चारणपूर्वकं आदिमध्यावस्थानेषु भवत् शब्दस्य प्रयोगं कृत्वा भिक्षाग्रहणं कुर्यु: । यथा च याज्ञवल्क्य:-

आदिमध्यावसानेषु भवच्छब्दोपलक्षिता ।
ब्राह्मणक्षत्रियविशां भैक्षचर्या यथाक्रमम् ।।

भिक्षामानीय गुरुं निवेद्य तदनुमत्या च संयतो भूत्वा तूर्ष्णीं भुञ्जीत: ।

एतादृशं कर्म वेदाध्ययनं यावत् स्वयं कुर्यात् । अयं च ब्रह्मचारी उपवीतं,मेखलाम्,अजीनं,कमण्डलुं, दण्डं च धारयेत् । स्ववर्णानुसारमेतेषां त्रयाणां वर्णानामुपनयनकाल: भिन्न एव । अर्थात् ब्राह्मणस्य अष्टमवर्षे,क्षत्रियस्य

एकादशे,वैश्यस्य द्वादशवर्षे उपनयनं भवति । यथा च मनुः-

गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनयम् ।
गर्भादिकादशे राज्ञो गर्भात्तु द्वादशे विशः ।।

एतेषां वर्णानां काम्यकालाऽपि दृश्यन्ते । यथा- ब्राह्मणस्य पञ्चमे अब्दे, क्षत्रियस्य षष्ठे अब्दे,वैश्यस्याष्टमेऽब्दे अधिकविद्यायै अधिकवलाय अधिकशस्यप्राप्तिनिमित्तं क्रमणोपनयनं कारयितव्यं भवति । अतः मनुः-

ब्रह्मवर्जसकामस्य कार्यं विप्रस्य पञ्चमे ।
राज्ञो बलर्थिनः षष्ठे वैश्यस्येहर्थिनोऽष्टमे ।।

एतेषां त्रयाणां वर्णानामुपनयनस्य पर्याप्तकालोऽपि भवति । यथा षोडश-द्वाविंशतिः-चतुर्विंशति वर्षाणि यावत्। एतेषु वर्षेषु यदि एतेषामुपनयनं न भवति तर्हि एते पतिताः व्रात्याश्च ज्ञायन्ते ।सर्वप्रकारेभ्यः द्विजातिकर्मेभ्यः एते पतिता भवन्ति । एते ब्रह्मचारिणः गुरुगृहे स्थित्वा गुरुसकाशे वेदाध्ययनं कृत्वा अध्ययनान्ते गुरवे अभिलक्षितदक्षिणारुपेण वस्तु प्रदाय स्नाायात् । ततः स ब्रह्मचारी स्नातकपदवाच्यो भवति ।तस्मात् आगत्य गृहस्थाश्रमे स्नातकः प्रविशेत् ।

ब्रह्मचारी द्विविधो भवति । उपकुर्वाणब्रह्मचारी,नैष्ठिकब्रह्मचारी चेति । यस्तावत् गुरुगृहात् आगत्य गृहस्थाश्रमे प्रविशति सः तावत् उपकुर्वाणको भवति । यस्तु गुरुगृहे गुरौ गुरुपत्न्यां गुरुपुत्रे वा एतेषाम् अभावे आश्रमाग्निसमीपे आमरणं यः तिष्ठति स ब्रह्मचारी नैष्ठिकब्रह्मचारी भवति । सः तावत् तस्मात् एव साक्षात् सन्यासी भवति ।

शिष्य-ऋत्विग्-गुरु-वन्धुनां-प्रेतेषु वेदाध्ययनं वर्जयेत् । सन्ध्यायां मेघगर्जननिर्घाते,भूमिचलने, उल्कापाते,ब्राह्मणस्य मन्त्रसमाप्ते,आरण्यकाध्ययने अनध्यायो भवति ।पञ्चदशयामावास्यायां, पौर्णमास्यां,चतुर्दश्यामष्टम्यां,राहुसूतके,चन्द्रसूर्यीपरागे अनध्यायो भवति । पशुमण्डुकनकुलश्वाहितमार्जारमूषकादिनां अन्तरागमने,इन्द्रधनूत्थाप्यने अहोरात्रमनध्यायः । आहारच श्रृगालादिपशुसमागमे अपवित्रवस्तु तथा शूद्रापि निकषा गमने अनध्यायः ।औत्पातिके रजोवर्षे,अपवित्रवस्तुनामघ्राणे अनध्यायो भवति ।अयं च ब्रह्मचारी वेदाध्ययनकाले मधु-वस्त्र-आसन-स्त्रीसहवासं च वर्जयेत् । भूमौ शयीतः गुरु उत्थित्वात्पूर्वं उत्थेत् । शयनात्परं शयीतः । वस्त्रासनादिषु गुरुसकाशात् न्यूनं भवेत् । गुरुशुश्रूषा एव वेदाध्ययनस्य तपस्या तस्मात् गुरुशुश्रूषया विद्या इति शास्त्रेषु प्रतिपादितमस्ति ।

धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम् । आर्युवेदः धर्मार्थकाममोक्षाणां लाभाय शरीरस्यारोग्यं नित्यं काम्यम्। यदि शरीरं अकर्मण्यं पीडाग्रस्तं वा भवति तर्हि किमपि कार्यं न सिध्यति ।

वयं मनुष्याः दोषगुणनिन्दाविचारदीनां विषये जानीमः । परन्तु केन करणेन जीवनयापनं सौहार्दपूर्णं भविष्यति तस्मिन् विषये अज्ञाः स्मः । आधुनिककाले शिक्षकाः विभिन्नविद्यालयेषु नृपाणां विषये वृक्षादीनां





विषये,तेषां गुणादीनां विषये विभिन्नप्रकाराणां ज्ञानं प्रयच्छन्ति । विज्ञानस्य प्रभावकारणात् पवित्रबृक्षान् वयं न जानीमः । नतमस्तको भूत्वा कथं सम्मानः क्रियते तदपि विस्मरामः।

एतत् तु न अस्माकं दोषः दोषोऽयं अद्यतनशिक्षाव्यवस्थायाः कारणं सर्वादौ विश्लेषणं कृत्वा शिक्षाग्रहणं अस्माभिः क्रियते ।

बाल्यकालात् गङ्गाजलं सेव्यम् असेव्यमन्यत् इत्यस्य ज्ञानं स्यात् । परन्तु तथा न दृश्यते । अद्यतनीयाः जनाः तुलसीविल्वादिपत्राणां उपयोगिताविषये न जानन्ति । पूर्वं औषधीयबृक्षाणां विषये विस्मृत्य जनाः आधुनिकद्रव्याणां शिक्षां आधुनिकसमाजे धर्मादिविषयं च शिक्षयन्ति । आधुनिकसमाजे शिक्षायाः एतादृशप्रभावः विद्यते येन संस्कृता नारी नारी पदवाच्या न भवति । धर्मरक्षार्थं आधुनिकसमाजे विद्यायाः अभावः दृश्यते । अद्यतनीयाः जनाः केवलं आधुनिकशिक्षाणाम् अध्ययनं कृत्वा धनोपार्जनाय एव इच्छन्ति । तेषां मते येन केनापि प्रकारेण परीक्षासु उत्तमाङ्कप्राप्तिः एव सुशिक्षा इति ।

आधुनिककाले पितरौ पुत्र यश-कीर्ति-धर्म-संयम-शरीररक्षादीनां विषये न कथयतः । परन्तु फेसवुक्,ह्वाटस्आप्, तथा आधुनिकअन्तर्जालस्य विषये ज्ञानं प्रयच्छतः । एवं च एतेषां ज्ञानं प्रकृतज्ञानमिति उच्यते । पितोः परमकर्तव्यं भवति यत् तौ बाल्यकालात् शिशवे धर्मादिज्ञानं यच्छेताम्। परन्तु तौ तत् न कुरुतः- यस्य प्रभावः आधुनिकसमाजे दृश्यते । समाजे बालाः राक्षससदृशाः व्यवहरन्ति । अतः यदि प्रत्येकेषु विद्यालयेषु एकैक धर्मयाजकस्य नियुक्तिः भवति तर्हि कोमलमती बालाः धर्मस्य विषये ज्ञानलाभं करिष्यन्ति । यत् शास्त्रकाराः वदन्ति

गुणिनि गुणज्ञो रमते नागुणशीलस्य गुणिनि परितोषः ।
अलिरेति वनात्पद्मं न दुर्दरस्त्वेकवासोऽपि ।।

अस्माकं धर्मशास्त्रे यानि अमूल्यरत्नानि सन्ति तानि वयं त्यजामः । ये जनाः सर्वदा धर्ममाश्रित्य तिष्ठति ते सुखेन सन्ति । संसारे जनाः यदि ज्ञानिनः भवन्ति तर्हि असत्कर्मणः विनाशः सम्भवति ।

यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ।।

यदि ज्ञानं एकमात्रं उन्नतेः साधनं भवति तर्हि कथं ज्ञानस्य प्राप्तिः स्यात् ,तस्यानुसन्धानमेव विज्ञजनानां कर्तव्यमिति । समाजे वयं तु अन्धाः स्मः एवं च उत्तमगुरुणामभावकारणात् सत्यज्ञानस्य प्राप्तिः न भवति । अद्य ये उपदेशान् प्रयच्छन्ति ते तु स्वयमेव धर्मस्य साक्षात् परिभाषां न जानन्ति । ये धर्मस्य परिभाषा वदन्ति ते स्वयमपि धर्मं न आचरन्ति । अतः धर्मस्य अनुदिनं हानिर्भवति इति नास्ति संशयः ।

किं कर्तव्यम् इति संशये ईश्वरदत्तमनुष्यत्वस्य सदुपयोगः एव कर्तव्य इत्युच्यते ।जन्मना सह कार्यमपि ईश्वरेण प्रदत्तम् । अतः यस्य यत्कर्म विद्यते सः तत् कर्म निष्ठासहकारेण साधनमिति धर्मः । यथा- स्वयं

श्रीकृष्णः सारथिरुपेण अर्जुनस्य मार्गदर्शनं कृतवान् तथैव ये उत्तमजनाः सन्ति ते अन्येषां मार्गदर्शनं कुर्युः । पुनः उच्यते यत् ज्ञानलाभाय उत्तमसाधनं भवति संशयरहितं मनः । यदि मनसि संशयः विराजते तर्हि विश्वासः नायाति,यदि विश्वासः नास्ति तर्हि ज्ञानस्योपलब्धिः न भवति । ईश्वरं द्रष्टुं वयं असमर्थाः, परन्तु विश्वासवलेन संशयशून्याः सन्तः वयं ईश्वरस्य पूजनं कुर्मः । यदि कश्चन संशयशून्यः भवितुमिच्छति तर्हि आदौ दुष्कर्मादीनां त्यागः स्यात् । संशये नष्टे सति ज्ञानस्योपलब्धिः स्वयमेव भवति ।

पुनः कथ्यते यथा शरीरस्य रक्षायै आहारविहारादिरावश्यकं तथैव ज्ञानबृद्धिनिमित्तं यत्नं अपेक्ष्यते । ज्ञानस्य निरन्तरप्राप्त्यर्थं ईश्वरस्य निर्दिष्टनियमानां पालनं कर्तव्यम् । तदर्थं सर्वाद्दौ नम्रभावः,सदाचारगुरुणामन्वेषणं,उपदेशादीनां ग्रहणं,उपदेशस्य पालनं , एवं ईश्वरे विश्वासः करणीयः । परन्तु प्रायशः आधुनिकसमाजे उपयुक्तगुरुणामभावात् उत्तमज्ञानस्य प्राप्तिः न भवति । अधुना वयं ज्ञानहक्कारणात् नगण्याः स्मः । प्राचीनभारते विद्यमानानां ये शिवतूल्यऋषयः आसन् अद्यापि तान् सर्वे जानन्ति । परन्तु तेषां एतादृशज्ञानस्य कारणं भवति ब्रह्मचर्यस्य पालनम् । छात्रजीवने ब्रह्मचर्यस्य पालनं हि तेषां शक्तेः कारणम् । परन्तु आधुनिकाः जनाः तस्याभावन बहुविधैः रोगैः ग्रस्थाः भवन्ति । रोगाणां प्रमुखकारणं भवति ब्रह्मचर्यस्य विनाशः । ब्रह्मचर्यस्य हानिकारणात् अधुना जनाः क्रमशः पूर्वापेक्षया दुर्वलाः भवन्ति । कार्यकारणे तादृशी क्षमता न विद्यते यादृशी पितामहादीनामास् । अद्य शिक्षादोषेण,दीक्षादोषेण वा भवुतु जनाः ब्रह्मचर्यस्य पालनाय न कथयन्ति । कारणं ते अपि ब्रह्मचर्यस्य महत्वं न जानन्ति ।

आधुनिकसमाजे प्रायशः ७०प्रतिशतः जनाः रोगग्रस्ताः । कारणं तेषां शरीरं अनुदिनं क्षीणं भवति । आयुर्वेदानुसारेण रोगोऽयं क्षयरोगत्वेन उच्यते । अधुना प्रायः जनानां शरीरं क्षीणं, मनः स्फुर्तिविहीनं,दृष्टिः क्षीणा, पक्वः केशः,२५क्रमदोषः विद्यत एव । मस्तिष्कपरिचालनात्पूर्वकं नूतनतथ्यानामाविष्कारः प्रायतः कर्तुं न शक्यते । सर्वे प्रायः अनुकरणप्रियाः सन्ति । सर्वदा कार्यं तु कुर्वन्ति एव , परन्तु पराधूीनाः सन्ति । स्वयं किमपि चिन्तयितुं विचारयितुं च असमर्थाः भवन्ति । विश्वविद्यालयात् उतीर्णाः च्छात्राः सर्वं ज्ञात्वा अपि अन्धरुपेण तिष्ठन्ति । आधुनिकभारतवर्षमिदं विनाशं प्रति गच्छति इति नास्ति संशयः,यदि कोऽपि हितैषी विद्यते तर्हि सः अग्रे आगत्य क्षयरोगात् भारतस्य रक्षणं कुर्यात् ।

अधुना समाजे विभिन्नवर्गीयजनाः दृश्यन्ते । भारतस्य पुनः निर्माणाय तैः बहुकिमपि उच्यते । तेषां वाणीं श्रुत्वा सर्वे एवं चिन्तयन्ति ,यत् ते अस्माकं भारतस्यास्य रक्षां करिष्यन्तीति ।परन्तु तेषां वाणीं अधुना वाणीरुपेण एव विराजते ।कदा कार्यस्य स्वरुपं प्राप्स्यति तस्य प्रमाणं नास्ति । विचारस्य विषयोऽयं यत् समाजसुधारकाः कदापि विनाशकाः न भवन्तु । यदि एवं भवति तर्हि भारतस्य विनाशः निश्चितप्रायः ।

भारतवर्षस्य कल्याणाय संस्काराय च जनैः आन्दोलनस्य प्रारम्भः जातः । जनाः ईश्वरकृपया देवीशक्तेः प्रभावात् जाग्रताः भवन्ति । अतः ये हितैषिजनाः सन्ति ते आधुनिकजनानां मार्गदर्शनं कुर्वन्तु ।





प्रायतः सर्वे विषयाः आलोचनारुपेण तिष्ठति परन्तु तस्य कार्यारम्भः अपि न जातः । पाश्चात्यशिक्षाभिमानानिनः संस्कारकाः एवं च उन्नतिप्रियाः सभ्यगणाः भारतस्य पुनरुत्थानस्य एवं च संस्कारस्य मूलमन्त्रात् तथा विस्मृताः न भवन्ति स एव चिन्तायाः विषयः । ते यथा कर्तव्यं विस्मृत्य अकर्तव्यं न साधयन्तु तस्य निरीक्षणं उत्तमैः कर्तव्यम् । प्राचीनऋषयः एवं मन्यन्ते यत् जन्मजातसंस्कारः एव मुख्यसंस्कारः । जनाः छात्रजीवने ब्रह्मचर्यव्रतपालनपूर्वकं गार्हस्थ्यधर्मानुसारेण स्वशरीरं कर्मं च उत्तमं कुर्वन्ति । यदि आधुनिकजनाः एतानि कर्माणि साधयति तर्हि ते अपि धार्मिकाः भवन्ति । आधुनिकानां धार्मिकत्वे सति समाजस्य उन्नतिः,देशस्य,धर्मस्य सर्वेषां जनानां च उन्नतिः भविष्यति ।

मेधाविजनाः एवं धैर्यवीर्यवन्तो जनाः सुसंस्कारसम्पन्नाः मानवाः भारतं यदि स्वजन्मभूमिरुपेण स्मृत्वा कार्यं कुर्वन्ति तर्हि भारतवर्षमिदं स्वर्णभूमिरुपेण प्रसिद्धं भविष्यति । परन्तु अद्य स्वर्णोऽयं अङ्गाररुपेण परिणतो भवति । स्वर्णस्य भारतदेशोऽय पुनः स्वर्णमयी भविष्यति ।

अतः कथ्यते यत् छात्रजीवने ब्रह्मचर्यस्य पालनं सर्वरोगप्रतिषेधकं सर्वदुःखविनाशकं एवं च भारतस्य पुनरुत्थानस्य बीजमन्त्रः । भो अभिभावकाः छात्राश्च, आगच्छन्तु सर्वे मिलित्वा पुनः महाशक्तेः आविर्भावाय प्रयासं करिष्यामः । यदि किमपि फलं न लभ्यते तर्हि दोषः नास्ति कारणमुच्यते यत्-

यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ।

पुत्रः चरित्रवान् भवतु इति पितुः इच्छा । कारणं पिता सर्वदा पुत्रस्य कल्याणाय चिन्तयति एवं च तदर्थं कार्यसाधनां च करोति । अतः पुत्रः सर्वदा विद्याप्राप्तये एवं उत्तमस्वभावलाभाय च प्रयत्नं कुर्यात् । परन्तु यदि पुत्रेण एतयोः अभावः दृश्यते तर्हि धनादीनां सम्पत्तेः च रक्षा दुष्करा भविष्यति । परन्तु पितरौ यदि एवं चिन्तयतः यत् तयोः इच्छानुसारं सर्वविधकार्यं भवतु तदा तयोरुपरि कस्यापि ध्यानं न गच्छति । एतदेव युवानां अधोपतनस्य मूलकारणम् । अस्मिन्समये बालाः सर्वं विस्मृत्य कुकार्यादिषु लिप्ताः सन्तो ब्रह्मचर्यस्य त्यागं कुर्वन्ति । ब्रह्मचर्यस्य त्यागः एव तेषां विनाशस्य कारणम् ।



# स्मृतिशास्त्रेषु कृषिव्यवस्था

मनोजकुमार

१.कृषिव्यवस्थायाः महत्त्वम् -

विश्वस्य जगत् कृषिजगदिति उच्यते । विश्वजनाः प्रायतः कृषिकार्ये निर्भरशिलाः सन्ति । कृषिश आङ्गलभाषायां एग्रीकल्चर् इति उच्यते । एग्रीकल्चर् इत्यस्य शब्दस्य उत्पत्तिः लैटिन्भाषायाः जाता लैटिन्-भाषायाम् एगर् वा एग्री शब्द अस्ति, अस्य अर्थः मृत्तिका इति भवति[१] । अनन्तरं कल्चर् इत्यस्यार्थ कृषिरिति । कृषिः एका प्राथमिकी क्रिया वर्तते । आदिमकाले मानवाः वन्यपशून् मारयित्वा खादितवन्तः तस्मिन् काले तदेव तेषां भोजनम् आसीत् । कालान्तरे कन्दमूलानि, फलानि स्वतः जायमानानि अन्नानि खादन्ति स्म । तदनन्तरं तैः मानवैः कृष्याः अन्नोपादनस्य प्रारम्भः कृतः । पूर्वपाषणयुगे मनुष्याः कृषिकर्म व्यापृताः अभवन् । सिन्धुनदीतटे तत्कालीनमानवाः कृषिकार्याणि सम्पादयन्ति स्म । येषां कार्याणां प्रारम्भ इदानीं विश्वेऽस्मिन् बहुषु प्रकारेषु कृषिः क्रियते । कृषेः मुख्यप्रकारद्वयम् अस्ति। प्रथमा निर्वाहकृषिः अपर वाणिज्यकृषिः । निर्वाहकृषिः - यया कृष्या कृषकपरिवारस्य आवश्यकतापूर्तिः भवति सा निर्वाहकृषि उच्यते । वाणिज्यकृषिः - वाणिज्यकृषौ शष्योत्पादनं पशुपालनं च । अस्यां कृषौ विस्तृतभूमेः आवश्यकता भवति । अधिकधनस्य निवेशः अपि आवश्यको वर्तते । शस्यादुत्पन्नाः तण्डुलाः विश्वस्य प्रमुखानि खाद्या भवन्ति । अतः भारतं हरितक्रान्तं शस्यश्यामलं इति कथयन्ति । सुशस्योत्पादननिमित्तं कृषौ बहूनि उपकरणानि उपयुज्यन्ते ।

२. स्मृतिकालीनकृषिव्यवस्था -

स्मृतिकालीनकृषिव्यवस्थायाः स्मृतिकारः पराशरः वरिचितवान् । धर्मशास्त्रकारेषु महर्षिपराशरः अन्यतमः वर्तते ।

यथोक्तं -

प्राजापतिं नमस्कृत्य कृषिकर्मविवेचनम् ।
कृषकाणां हितार्थाय ब्रूते ऋषिपराशरः ।।

ऋषिपराशरः कृषकस्य हितार्थाय ब्रह्मदेवं नमस्कृत्य कृषिकर्मणः विवेचनं कृतवान् । चतुर्वेदपारङ्ग मेधावी ब्राह्मणः यदि कृषिकर्म हीनदृष्ट्या गृह्णाति चेत् सोऽपि दरिद्रतायां ग्रस्तो भवति[२] । अन्नं प्राणा बलं चान्नमन्नं सर्वार्थसाधनम् । देवासुरमनुष्याश्च सर्वे चोन्नोपजीविनः[३] । जनाः सुवर्णरौप्यमाणिक्यवसनैरपि पूरिता आसन् । तथापि कृषकान् पार्थयन्ति स्म। अन्नं हि धान्यसञ्जातं धान्यं कृष्या विना न प्राप्यते । अतः सर्व परित्यज्य कृषिं यत्नेन कारयेत् । कृषिर्धन्याः कृषिर्मेध्या जन्तूनां जीवनं कृषिः, हिंसादिदोषयुक्तोऽपि अन्ने अतिथिपूजनात् हिंसादिदोषात् मुक्तः भविष्यति ।

पराशरः कृषिव्यवस्थाया आदौ जलाढकनिर्णयं कृतवान् ।

जलाढकनिर्णयः -





कृषिकर्मार्थं जलस्य आवश्यकता वर्तते । जलस्य संरक्षणं आढकमध्ये स्थापनीयं इति मुनिभिः प्रकल्पितम् । आढकस्य मापनं शतयोजनविस्तीर्णं भवेन्मानं, त्रिंशद्योजनं विंशाधिकैकशकोसैः क्रोसं आयत्तेन जलढकं निर्माणं भवति । इन्द्रस्व कृपया सम्पूर्णजलस्य दशभागान् समुद्रमध्ये, षड्भागान् पर्वतोपरि, चतुर्भागान् पृथिव्यां च वर्षन्ति । यथा[४] -

समुद्रे दशभागांश्च षड्भागानपि पर्वते ।
पृथिव्यां चतुरो भागान् सदा वर्षति वासवः ।।

हलप्रसारणम् -

माघे फाल्गुने च हलप्रसारणं क्षेत्रे कुर्यात् । हलप्रसारणं नैव कृत्वा यः कर्षणं करोति तस्य सर्वाणि कृषिकार्याणि व्यर्थानि भवन्ति ।

फलोत्पादनस्य कालः -

हेमन्ते कृष्यते चेत् उत्तमं शस्यं (सुवर्णं) फलति, वसन्ते मध्यमं फलं फलति, ग्रीष्मे कृष्यते चेत् धान्यं फलति । वर्षासु कृष्यते चेत् दरिद्रं भवति ।

२.२. बीजस्थापनविधिः –

माघे वा फाल्गुने मासि सर्वबीजानि संहरेत् । आतपे सम्यक् बीजं शोषयेत् । बीजं अधः नैव विनिधापयेत्[५] । बीजस्य पुटिकां कृत्वा विधान्यं तत्र शोधयेत् । बीजं विधान्यसंमिश्रं चेत् विशेष फलहानिकरं भवति[६] । एकरुपं तु यद्बीजं तत् निर्भरं फलं फलति । अतः एकरूपं बीजं प्रयत्नेन समाचरेत्[७] । सुदृढं पुटकं कृत्वा विनिर्गतं तृणं छिन्ध्यात् । तस्मिन् अच्छिन्नतृणके कृषिः तृणपूरिता स्यात्[८] । बीजपुटिकां वल्मीके, गोस्थाने, प्रसूतानिकेतने, वन्ध्यावतीगेहे न स्थापयेत् । यथोक्तं कृषिपराशरेण[९] -

न वल्मीके न गोस्थाने न प्रस्ततानिकेतने ।
न च वन्ध्यावति गेहे बीजस्थापनमाचरेत् ।।

कां बीजं न स्पृशयेत् इति जिज्ञासायां पराशरेण उक्तम्[१०] -

नोच्छिष्टं स्पर्शयेद्बीजं न च नारीं रजस्वलाम् ।
न वन्ध्या गर्भिणी चैव न च सद्यप्रसूतिका ।।

वर्जनीयं बीजम् -

दीपाग्निधूमसस्पृष्टं वृष्ट्या चोपहतं यत् बीजं तद् सदा वर्जनीयम् । बीजोपरि भ्रमेणापि कृषको घृतं, तैल, तक्रं, प्रदीपं, लवणं च नैव कारयेत्[११] ।

२.३. बीजवपनविधिः -

प्रोथितं मिश्रितं बीजं भ्रान्त्या क्वचित् न निर्वपेत् । यद् बीजं विधान्यं गुडकोम्मिश्रं तद्बीजं वन्ध्यतां

व्रजेत् । 'बीजमूला: फलश्रिय: भवन्ति ।'[12] अत: बीजस्य यत्नं कुर्यात्। बीजवपनं कदा कुर्यादिति प्रतिपाद्यते । यथा[13] -

वैशाखे वपनं श्रेष्ठं ज्यैष्ठे तु मध्यमं स्मृतम् ।
आषाढे चाधमं प्रोक्तं श्रावणे चाधमाधमम् ।।

वैशाखे बीजवपनं श्रेष्ठं उक्तम् । ज्येष्ठे तु मध्यमं, आषाढे अधमं, श्रावणे च अधमाधमं प्रोक्तम् । वपने रोपणे युग्मवारं विवर्जयेत् । भूषिकेभ्य: शलकीटाभ्यां भयात् युग्मवारं त्यजेत् । वृषान्ते मिथुनादौ च त्रीण्यहनि भूरजस्वला उच्यते । अत: तद् दिनत्रयं बीजं न वापयेत् । परिणामत: कृषक: पापाद् विनश्यति[14] ।

हिमवारिनिषिक्तस्य बीजस्य तन्मना शुचि: ।
इन्द्रं चित्ते समाधाय स्वयं मुष्टित्रयं वपेत् ।।
कृत्वा धान्यस्य पुण्याहं कृषको हृष्टमानस: ।
प्राङ्मुख: कलसं धृत्वा पठेन्मन्त्रमनुत्तमम् ।।
वसुन्धरे महाभागे बहुशस्यफलप्रदे ।
देवराज्ञि नमोऽस्तु ते शुभगे शस्यकारिणि ।।
रोहन्तु सर्वशस्यानि काले देव: प्रवर्षतु ।
सुस्था भवन्तु कृषका धनधान्यसमृद्धिभि: ।।
कृत्वा तु वपनं क्षेत्रे कृषकान् घृतपायसै: ।
भोजयित्वा सुभोज्येन निर्विघ्ना जायते कृषि: ।।

हिमवारिनिषिक्तस्य बीजस्य शुचि: स्यात् । इन्द्रं चित्ते समाधाय स्वयं कृषक: मुष्टित्रयं वपेत् । इन्द्रं चित्ते प्राङ्मुखेन कलसं धृत्वा धान्यस्य पुण्यमाहं "वसुन्धरे महाभागे बहुशस्यफलप्रदे । देवराज्ञि नमोऽस्तु ते शुभगे शस्यकारिणि । रोहन्तु सर्वशस्यानि काले देव: प्रवर्षतु । सुस्था भवन्तु कृषका धनधान्यसमृद्धिभि: । कृत्वा तु वपनं क्षेत्रे कृषकान् घृतपायसै: । भोजयित्वा सुभोज्येन निर्विघ्ना जायते कृषि:" इति मन्त्रं पठित्वा बीजस्य वपनं कृत्वा मानव: उत्तमं फलं प्राप्नोति । बीजस्य वपनं कृत्वा मयिकां तत्र दापयेत् । तदभावेन बीजानां समजन्म न जायते ।

२.४. रोपणविधि: -

बीजरोपणकाले सर्वशष्यानां कन्यायां चतुराङ्गुलव्यवधानेन रोपणं कुर्यात् । बीजरोपणं द्विविधं भवति यथा – वपनं, रोपणं च वपनेन रोगात् शस्यरोगं मुक्तं जायते । रोपणेन रोगात् मुक्तं न जायते ।

२.५. धान्यकट्टनविधि: -

आषाढे, श्रावणे मासि धान्यं आकट्टयेत् । यद्धान्यं न आकट्टयेत् चेत् दद् बीजं तथैव स्थास्यति। भाद्रमासे कृषक: निस्तृणं कारयेत् । यथोक्तं पराशरेण -





आषाढे श्रावणे मासि धान्यम् आकट्टयेद् बुध: ।
अनाकट्टे तु यद्धान्यं यथा बीजं तथैव हि ।।

भाद्र[illegible]म् –

[illegible]र्थं धान्यानां जलं भाद्रमासि विमोचयेत् । मूलमात्रर्पितं तत्र जलरक्षणं कारयेत् ।

जलर[illegible]

[illegible] कार्तिकि धानस्य जलरक्षणं कुर्यात् । यथोक्तं[1515] .

कृ.प.-श्लो.१९७

यथा कुलार्थो कुरुते वुलस्त्रीपरिरक्षणम् ।
तथा संरक्षयेद् वारि शरत्काले समागते ।।

[illegible]लार्थो कुलस्त्रीपरिरक्षणं यथावत् करोति तथावत् शरत्काले समागते वारिं संरक्षयेद् । कार्तिकान्ते धान्यं [illegible]त् ।

धान्यस्था[illegible]म् -

[illegible]नलग्ने शुभे ऋक्षे धान्यस्थापनं उत्तमं भवति । स्वौम्ये भृगोवारि च धान्यस्थापनं वर्जयेत् । ॐ धन[illegible] सर्वलोकहिताय देहि मे धनं स्वाहा[16] । ॐ नवधुर्यसहे देवि सर्वकामविवर्धिनि कामरूपिणि सेह मे धनं स्वाहा । लिखित्वा तु स्वयं मन्त्रं धान्यागारेषु निक्षिपेत् । तत: समृद्ध्यर्थं धनलक्ष्मीं पूजयेत् ।

पादटिप्पणी -

१ .राष्ट्रीय शैक्षिक अनुसन्धान पृ.-४०
२ .कृ.प.-श्लो.१
३ .कृ.प.-श्लो.६
४ .कृ.प.-श्लो.२९
५ कृ.प.-श्लो.१५७
६ .कृ.प.-श्लो.१५८
७ .कृ.प.-श्लो.१५९
८ .कृ.प.-श्लो.१६०
९ .कृ.प.-श्लो.१६१
१० .कृ.प.-श्लो.१६२
११ कृ.प.-श्लो.१६३
१२ कृ.प.-श्लो.१६७
१३ .कृ.प.-श्लो.१६७
१४ .कृ.प.-श्लो.१७५

शोधच्छात्र:
विभाग: - धर्मशास्त्रम्
राष्ट्रियसंस्कृतसंस्थानम्, श्रीसदाशिवपरिसर:, पुरी



# आधुनिकयुगे आचारस्य महत्त्वं लोकव्यवहारश्च

मनीषा पाणिग्राही
शोधच्छात्रा, धर्मशास्त्रविभागः

धर्मार्थकाममोक्षात्मकचतुर्वर्गफलप्राप्तिः- यथा हि चतुर्षु पुरुषार्थेषु यः प्रथमः पुरुषार्थः सः एव धर्मः। धर्मं विना अर्थकामादीनां प्राप्तिर्नैव सम्भवति। अतो निखिलपुरुषार्थचूडायमानस्य धर्मस्य प्राधान्यं महत्त्वं च सर्वत्रैव परिलक्ष्यते। धृञ् धारणपोषणयोः इत्यस्मात् धातोः मन् प्रत्यये कृते धर्मशब्दनिष्पन्नः भवति। धर्मशब्दस्य अर्थाः बहुविधाः इति शास्त्रकाराः प्रकटयन्ति। अर्थात् येन माध्यमेन लोकानां धारणं सम्भवेत् यश्च लोकानां सुनिर्वाहार्थं संसारं धारयति स एव धर्मपदवाच्यः। धर्मशब्देन सत्य- अंहिसा-अस्तेय-सदाचार-परोपकारादयः अनेकविधा अर्था परिकल्प्यन्ते। धर्मस्य लक्षणं भगवता मनुना प्रतिपादितं यत्-

विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत।।[1]

विदितमेव तत्र भवतां समेषां विश्ववासिनां हिताय पापपुण्यात्मके अस्मिन् जगति विदितेषु सर्वशास्त्रेषु लोकसंरक्षकत्वेन सर्वप्राचीनत्वेन सारमर्मत्वेन प्राधान्येन,वेदानुमापकत्वेन पुरुषार्थचतुष्टये धर्मस्य प्रतिपादकत्वेन धर्मशास्त्रमिदं विराजतेतराम्। तदिदं धर्मशास्त्रं स्मृतिरिति अपरां संज्ञां वहति। "श्रुतिस्तु वेदविज्ञेयो धर्मशास्त्रं तु वै स्मृतिः"[2]। इति वचनात्। पुराणन्यायमीमांसादिषु चतुर्दशविद्यासु धर्मशास्त्रस्य स्थानत्वे सति लोकसुखार्थै धर्मशास्त्र-साहित्यं प्रामुख्येन त्रिधा विभज्यते। यथा-आचारभागः, व्यवहारभागः, प्रायश्चित्तभागश्चेति। एतेषु आचारभागः अन्यतमः, सर्वश्रेष्ठः वर्त्तते। याज्ञवल्क्यस्मृतौ प्रथमाध्याये आचारविषये वर्णितमस्ति। एतद् व्यतिरेकम् अन्येषु शास्त्रेष्वेपि आचारस्य महत्त्वं परिलक्ष्यते। आचारो नाम चरित्रं, चरितं, वृत्तं, शीलं चेति। आङ् उपसर्गात् चर् धातोः घङ् प्रत्यते कृते आचारशब्दः निष्पन्नः। आचारः नाम सदाचारः अपि भवति।

अत्र तु आचारस्याधुनिके युगे किं महत्त्वं लोकव्यवहारे किं चास्यावदानमिति प्रतिपादनं मे आशयः। "चतुर्णा वर्णानामाचारश्चैव शाश्वतः"[3] इति सकलमानवानां कृते धर्मे उक्तत्वात् वर्णानामाचार एव धर्मः। आचारप्रभवो धर्म इत्यादिरूपेण भगवता कृष्णद्वैपायनेन उक्तम्, "आचारः परमो धर्मः"[4] इत्येवं प्रकारेण भगवता मनुना उक्तत्वात्, "आचार हन्त्यलक्षणम्"[5] तत् प्रचोदितत्वेन आचारस्य प्रामुख्येन प्राथम्यं च सर्वत्रैव वरीवर्तते। आचारस्य महत्त्वं विष्णुपुराणेऽपि प्राप्यते। यथा-

आचार-स्वर्गजनन आचारः कीर्त्तिवर्धनः।
आचारश्च तथाऽऽयुष्यो धन्यो लोकसुखावहः।।[6]

अत एव आचारो हि भारतीयहिन्दुधर्मस्य मूलाधारः। सर्वेषु धर्मशास्त्रेषु आचारस्य प्राधान्यं परिलक्ष्यते। तद्यथा मनुना प्रतिपादितम्-

नेक्षेतोद्यन्तमादित्यम् ।। मनु. ४/३७





दुराचारो हि पुरुषो लोके भवति निन्दितः।
दुःखभागी च सततं व्याधितोऽल्पायुरेव च।।[7]

वस्तुतः आचारहीनः जनः सर्वदा दुःखभागी, व्याधीग्रस्तः अल्पायुश्च भवति। दुराचारव्यक्तिः लोके निन्दितो भवति।

सर्वलक्षणहीनोऽपि यः सदाचारवान्नरः।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति।।[8]

यः जनः सदाचारवान्, श्रद्धान्वितः परदोषानभिधाता स शुभसूचकलक्षणशून्योऽपि शतं वर्षाणि जीवति।

समाजस्य व्यक्तेश्च समुन्नतिराचारद्वारा हि सम्भवति। यथा आचारभ्रष्टाः संस्कारं विनशयन्ति। परन्तु ये केचन स्वल्पसंख्यकाः सदाचारसम्पन्नाः कामक्रोधलोभमोहादिरहिताः, तेषां प्रभावेण इयं पृथिवी सुदृढा वर्त्तते, तेषां धर्मबलेन विश्वस्य गौरववृद्धिर्जायते। यावत् पर्यन्तं भारतीयसंस्कृतेरितिहासे आचारस्य प्राधान्यं वर्त्तते। तावत्पर्यन्तं समाजस्य स्थितिः सुदृढा भवति। अतो हि एवं महत्त्वपूर्णाचारस्य विषये विवेचनावसरे अस्माकमवश्यमेव सर्वव्यापकस्यास्य दिग्दर्शनं प्रदातव्यमिति।

विश्वेऽस्मिन् भिन्नाः मानवाः जायन्ते। तत्र केचन च सृष्टेः संरक्षकाः। अन्ये तु विनाशकाः सर्वदा मन्दकार्ये लिप्ताः, तेषां कृते च आचारस्य किमपि स्थानं नास्ति। परन्तु संरक्षकाः सर्वदा आचारेण प्रभाविताः सन्तो विश्वकल्याणाय व्यग्राः भवन्ति। आचारो हि तेषां पथपदर्शकः। अतः कथं वक्तुं शक्यते यत् लोकव्यवहारे आचारस्य स्थानं नास्तीति। समाजेऽपि आचारोऽयं अन्तर्भुक्तः। आचारं विनापि उन्नतसमाजस्य सृष्टिर्न जायते। उभयोर्मध्ये सम्बन्धः विद्यते एव मानवः समाजे प्रचलितान् नियमान् आचरति। ये तु नियमाः मन्वादिभिर्महर्षिभिः प्रतिपादिताः सन्ति। प्राचीनकालादपि अद्यावधि आधुनिकयुगान्तं तेषां नियमानां प्रचलनं परिलक्ष्यते। यथा-

नास्फोटयेन्न च क्ष्वेडेन्न च रक्तो विरावयेत्।[9]

आचारोऽयं दीर्घजीवनस्याधारः सुलक्ष्यभावपरिपूरणात्मकश्च भवति। धर्मे तृतीयं प्रमाणं भवति सदाचारः। सर्वे स्मृतिकाराः धर्मे वेदधर्मशास्त्रयोः प्रामाण्यं स्वीकृत्यानन्तरं सदाचारं प्रमाणयन्ति। तच्चाचरणं पुनः धर्मज्ञानां शिष्टानामेव। शिष्टानां लक्षणमपि कतिपयैः स्मृतिकारैः प्रतिपादितम्।

स्मृतिसदाचारवुभावपि स्मृतिमूलकौ। तयोः क्रमेण प्रामाण्यं वेदितव्यम्। अतो भगवद्विश्वासः, सदाचारः सामाजिक-नियमाश्च सर्वे धर्मे व्यवस्थिताः। धर्ममूलेषु सदाचारस्यास्तित्वं स्वीकृत्य मनुः सदाचारपालनैव धर्मस्य रक्षणं भवतीति प्रत्यपादयत्। तद्यथा-

श्रुतिस्मृत्युदितं सम्यङ् निबद्धं स्वेषु कर्मसु।
धर्ममूलं निषेवेत सदाचारमतन्द्रितः।।[10]

अतः सदाचाराद्धर्म उत्पद्यते इति नास्ति सन्देहः।

नोपगच्छेत्प्रमतोऽपि स्त्रियमार्तवदर्शने ।। म. ४/४०

सांप्रतिकसमाजे आचारहीनानां जनानां बाहुल्यात् अराजकता एव अस्माकं संसारं ग्रासयति। संसारोऽयमपि विनाशस्य समीपवर्त्ती भवतीति नास्त्यत्र काचित् विप्रतिपत्तिः। आचारबलेन जनानां चरित्रगठनं सम्भवति। आचारवन्तः जनाः सुखेन संसारं स्थापयितुं समर्थाः भवन्ति। मानवाः इहलोके यथा यशस्विनः स्वस्य जीवने भवेयुः। परलोके च सुखिनः भवेयुः। तदर्थं आचारपालनस्य सुमहती आवश्यकता वर्त्तते। अत एव संसारस्य जनानां हिताय, तेषां सुखार्थं चतुर्विधानां पुरुषार्थानां प्राप्तये च आचार एव प्रधानमार्गो भवति। चरित्रगठनाय सदाचार एव प्रथमं सोपानम्। अनेनैव मानवानाम् आत्मोन्नतिः सम्भवति।

संसारेऽस्मिन् आचारः नाम सदाचारः मानवजीवनस्य मेरुदण्डः इव तिष्ठति। मेरुदण्डं विना यथा मानवस्य स्थितिः न सम्भवति, तथैव आचारेण विना मानविकतायाः अभावात् जीवितोऽपि मृतो भवति अर्थात् पशुवत् तिष्ठति। यतो हि आहारनिद्रादिना कर्मणा मानविकतायाः परिप्रकाशो न जायते। समाजेऽपि आचारहीनः मानवरूपेण केनापि न गण्यते। अत एव मानविकतायाः पूर्णत्वप्राप्त्यर्थं नूनमेव आचारोऽपेक्ष्यते। अतः आचारस्य श्रेयसाधनत्वात् आचारवान् लभते ज्ञानम् "आचारः परमो धर्मः" एतानि यानि शास्त्रीयवचनानि शोभन्ते तानि सर्वाण्येव अद्यतन-समाजस्य श्रेयानि भवन्ति। मनुना चोक्तं-

आचाराल्लभते ह्यायुराचारादप्सिताः प्रजाः।
आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणम्।।[११]

दुराचारिपुरुषः समाजे निन्दितः, दुःखभाग् , रोगग्रस्तः अल्पायुश्चापि भवति। मनुना प्रतिपादितं आचारो हन्त्यलक्षणम् वचनात् अवगम्यते यत् अशुभस्य आचारस्य पापस्य च विनाशार्थं जगत् उद्धारार्थम् आचारस्य महत्वम् आवश्यकता च अत्यधिका सर्वमान्या भवति। नास्त्यत्र सन्देहस्य लेशावसरः।

युगानुरूपः संसारोऽयं परिवर्त्तितो भवतीति वचनं सत्यम्। परिवर्त्तानुसारं मानवानामपि परिवर्त्तनमवलोक्यते। यद् वा भवतु प्राचीनकालादारभ्य अद्यावधि आचारस्य महत्त्वं लोकव्यवहारे स्यात् अस्त्येव। यतो हि समाजस्य संगठनाय प्रथमतः मानवः सदाचारवान् भवेदिति शास्त्रकाराणाम् आशयः। परिवर्त्तनशीलोऽयं समाजः वैदिकनियमान् परिवर्त्तयितुं पारयति। एतस्मात् कारणात् आधुनिकयुगे आचारस्य महत्त्वमस्ति एव।

सहायकग्रन्थसूची-


१. म.स्मृ.-२/१
२. म.स्मृ.-२/१०
३. म.स्मृ.-१/१०७
४. म.स्मृ.-१/१०८
५. म.स्मृ.-४/१५६
६. विष्णुधर्मोत्तरपुराणः-२७१/१
७. म.स्मृ.-४/१५७
८. म.स्मृ.-४/१५८
९. म.स्मृ.-४/६४
१०. म.स्मृ.-४/१५५
११. म.स्मृ.-४/१५६


◆◆◆





# उत्कलीयधर्मशास्त्रकारेषु कालिदासचयनिनः महत्त्वम्

विश्वलक्ष्मीविश्वालः

भारतीयसामाजिकपरम्परायां धर्मार्थकाममोक्षाश्चत्वारः पुरुषार्थाः सन्ति। तेषु चतुर्विधपुरुषर्थेषु मोक्ष एव परमपुरुषार्थः साध्यः । धर्मेणैव मोक्षलाभः। धर्मविषये भगवतामनुना[१] उक्तं यथा-

विद्वद्भिःसेवितः सद्भिर्नित्यमद्वेषरागिभिः।
हृदयेनाऽभ्यनुज्ञातो यो धर्मस्तंनिबोधत।।

धर्मशास्त्रजगति धर्मशास्त्रसम्बन्धीयविराजमानाः ग्रन्थाः विद्यन्ते । तत्र हिन्दुधर्मानुरागिणां विश्ववासिनां हिताय परंब्रह्मणः भगवतः निश्वासभूतस्य वेदस्य अनुयायिनः ये तावत् धर्मप्रतिपादिकाः ग्रन्थाः सन्ति तेषां ग्रन्थानाम् अनित्यत्वऽपि पुरुषार्थकारणात् तेषां ग्रन्थानां प्राधान्यं स्वीकार्यम्।

पवित्रेऽस्मिन् भारतवर्षे आर्य्याणां जीवनकालः धर्मेणैव प्रतिष्ठितो भवति । आर्य्याणां मूलधर्मग्रन्थो वेदः । सूत्र-स्मृति-भाष्यादिधर्मशास्त्रसाहित्येषु निबन्धोऽपि धर्मनिर्णायकताप्रामाण्यं भजते । सूत्र- स्मृति-भाष्यात्मकेभ्यो धर्मशास्त्रग्रन्थेभ्यो यदैव धर्मनिर्णयेऽत्यन्तं कष्टसाध्यं भवति तदवसरे तदुपजीविनां धर्मनिबन्धग्रन्थानां भूयस्यावश्यकता परिलक्ष्यते । सूत्र-स्मृति-भाष्यात्मकेभ्योऽर्वाक्कालिकतया निबन्धसाहित्यस्य कालः सप्तमशतकाद् आरभ्य अष्टादशशतकं यावत् ऐतिहासिकैः स्वीकृतः ।

निबन्धशब्दोऽपि बहुष्वर्थेषु व्यवह्रियते । तत्रशब्दकल्पद्रुमे निबन्धातीति निबन्ध इत्युच्यते । निं उपसर्गात् बन्ध् धातोः घञ्प्रत्ययकृते निबन्धशब्दो निष्पद्यते । निबन्धो नाम शब्दस्य वृत्तिः इति हेमचन्द्रः ।

[२]धर्मप्रतिपादकं शास्त्रं धर्मशास्त्रमिति कथ्यते । शास्त्रं नाम शास्यते नियम्यते अनेनेति शास्त्रम् । शास्धातोः ष्ट्रन्प्रत्यये कृते शासति लोकसुरक्षार्थं समादिशति विधिनिर्धारणं करोति वा इत्याद्यर्थे प्रसज्यते । प्रतिपाद्यप्रतिपादकसम्बन्धाद्धर्मस्य शास्त्रं धर्मशास्त्रमित्यपेक्षया धर्मप्रतिपादकं शास्त्रं धर्मशास्त्रमिति विग्रहवाक्यं समीचीनतरं प्रतिभाति । सकलशास्त्रचूडायमानत्वेन निखिललोकसुरक्षकत्वेन सर्वप्राचीनत्वेन चास्य शास्त्रस्य सातिशयमहत्त्वं सर्वप्राचीनशास्त्रान्तरेष्वपि प्रशंसितमस्ति । स्मृतिशास्त्रं स्वप्रतिभया सर्वानिकसूत्रैणैव निबन्धाति महाभारते वर्णितविषयाणां महनीयत्वप्रकटनावसरे व्यासदेवेन पुण्यशास्त्रत्वेन धर्मशास्त्रस्यापि उल्लेखः विहितः[३]-

धर्मशास्त्रमिदं पुण्यमर्थशास्त्रमिदं परम् ।
मोक्षशास्त्रमिदंप्रोक्तं व्यासेनामितबुद्धिना ।।
धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ।
यदिहास्ति तदन्यत्र यन्नेहास्ति तन्नक्वचित् ।।
अष्टादशपुराणानि धर्मशास्त्राणिसर्वशः ।
वेदाः साङ्गस्तथैकत्र भारतं चैकतःस्थितम् ।।

"धर्मशास्त्रसाहित्यान्तर्गतं निबन्धसाहित्यं शास्त्रस्यास्य महनीयत्वं प्रकटीकरोति । धर्म... विविधसन्देहस्थलेषु विविधप्रकारकाः निबन्धग्रन्था एव संशयच्छेदकाः मार्गदर्शकाश्च भवन्ति । पर... विप्रतिपद्यमानानि प्रमाणवचनानि संगृह्य मीमांसादृष्ट्या विचार्य्य देशाचारं चानुसृत्य एभिः स्मृतिनि... स्वीयाः सिद्धान्ताः प्रतिपादिताः । एषु केषाञ्चन मतानि निखिलोऽपि भारतवर्षे समाद्रियन्त, अन्येषां च केषा... मतानि स्थानविशेषेषु अङ्गीक्रियन्ते ।

धर्मशास्त्रं प्रति उत्कलीयानामवदानम्-

उत्कलेषु संस्कृतभाषायाः धर्मिकसाहित्यस्य च परम्परा बहुप्राचीनकालतः अद्यापि प्रवहति । उत्क... प्राप्तेभ्यः प्राचीनताम्रलेखशिलालेखेभ्यः ज्ञायते यत् ख्रीष्टीयतृतीयशताब्दीतः सप्तदशशताब्दी मध्ये एवोत्क... संस्कृतसाहित्ये महत्यभिवृद्धिः संजाता"[४] ।

अनेकेषुस्थलेषु विविधस्मृतयः धर्मसूत्राणि च आपाततः परस्परं विप्रतिपद्यमानानि दृश्यन्ते । ... विरोधं परिहृत्य समन्वयस्थापनार्थं स्वतन्त्रनिबन्धग्रन्थानां प्रणयनं विहितं धर्मशास्त्रमर्मज्ञैः । तैः युक्तिप्रमाणपु... व्यवस्था प्रदत्ताः[५] । धर्मशास्त्रीयनिबन्धकारेषु केचन दाक्षिणात्याः, कतिपयाः महाराष्ट्रीयाः, इतरे उत्कली... अन्ये वङ्गीयाः,अपरे च मैथिलाः येषां निबन्धग्रन्थाः अद्यत्वऽपि धर्मनिर्णये प्रमाणत्वेन सर्वत्र समाद्रि... धर्मशास्त्रवाङ्मये उत्कलीयधर्मशास्त्रकाराणामवदानमतीव महत्त्वं भजते ।

उत्कलीयाः धर्मशास्त्रविदः विद्वांसोऽपि स्मृतिनिबन्धरचनायां न्यूनाः नासन् । एते... अखिलभारतीयधर्मशास्त्रसाहित्याकाशे समुज्ज्वलज्योतिष्का इव किमपि विशिष्टं स्थानमधिकुर्वन्ति ।

उत्कलीयस्मृतिनिबन्धाराः केचनदेवस्थाने, केचनस्वगृहे च स्थित्वा सामाजिकरीतिशृङ्खलार्थ ... स्वनिबन्धग्रन्थान् प्रस्तुवन्तः, एते उत्कलीयाः स्मृतिनिबन्धारस्तु राजाश्रयेण ग्रन्थान् रचितवन्तः । अ... स्वाधीनतया ग्रन्थान् लिखितवन्त इत्येतेषां वैशिष्ट्यम् । एतेषां समेषामुत्कलीयस्मृतिनिबन्धॄणां नामानि क्रमशो... प्रतिपाद्यन्ते ।

"स्वनामधन्यानां स्वकृतिभिः उत्कलीयधर्मशास्त्रकाराणां मध्ये शतानन्द-श्रीधर-नीलाम्बर-शङ्ख... शम्भुकर-विद्याधर-बृहस्पति-रामचन्द्र-गजपतिपुरुषोत्तमदेव-प्रतापरुद्रदेव-बृहस्पतिसूरि-नरसिंहवाजपेयि... विश्वनाथमिश्र-विप्रमिश्र-जगन्नाथ-कालिदासचयनि-योगीश्वर-हलधर-दिव्यसिंह-लक्ष्मीधर-वासुदेव-गोपाल... रघुनाथ-गदाधरराजगुरु-वासुदेव-कृष्णदास-पीताम्बर-दामोदर-रघुनाथदास-काह्नुमिश्रप्रभृतयः प्रमुखा भवन्ति...

कालिदासचयनिनः देशकालकृतीनां परिचयः-

शुद्धिचन्द्रिकाभिधस्य स्मृतिनिबन्धग्रन्थस्य कर्त्ता कालिदासचयनी सुप्रसिद्धधर्मशास्त्रकार- रूपेणोत्क... सुपरिचितः अस्ति । कालिदासचयनी श्रीजगन्नाथपुरीप्रान्तीयबीरबलभद्रपुरशासनग्रामनिवासी आसीत्... असौ नित्याचारप्रदीपकारनरसिंहवाजपेयिनः पुर्ववर्ती । कालिदासचयनिनः कालः पञ्चदशशताब्द्याः द्वितीयार्द्धभा... एतेषां पण्डित्यप्रकर्षमतीवाश्चर्यजनकम् । तत्प्रणीयग्रन्थः लघुकलेवरोपि उत्कलस्य गृहे गृहे तस्य प्रश...





दृश्यते । कालिदासचयनिकृता शुद्धिचन्द्रिका स्मृतिशास्त्रे विशिष्टं स्थानं धत्ते । शुद्धिचन्द्रिका सप्तविंशतिपद्यविशिष्टा। कालिदासेन शुद्धिचन्द्रिकायां कृत्यकल्पतरूकारलक्ष्मीधरभट्टस्य नामोल्लेखःकृतः। ग्रन्थेस्मिन् आशौचमधिकृत्य बहुविचारः कृतोऽनेन । ग्रन्थरत्नेऽस्मिन् जनन-मरण-रजःस्राव-गर्भस्रावाद्यशौचशुद्धिविषयाः प्रतिपादिताः । नक्षत्रमालविभूषितचन्द्रिका यथा तमो विनाशयति तथेयं शुद्धिचन्द्रिका अशौचरुपतमोविनाशाय लोके नितरां दिव्यति ।

ग्रन्थस्यास्य वैशिष्ट्यं वैदग्ध्यं च दृष्ट्वा प्रायशः परवर्त्तिभिः बहुभिः उत्कलीयैः स्मृतिनिबन्धृभिः एतन्मतं स्व स्वग्रन्थे उपनिबद्धम् । ग्रन्थस्यास्योपरि शान्तिरथः विद्यावागीशश्च द्वौ टीकाकारौ टीकां कृतवन्तौ। उत्कलभाषयापि गद्यपद्यानुवादः दृश्यते । ख्रीष्टीयषोडशशतकस्य प्रथमार्द्धभागीयः श्रीनरसिंहवाजपेयी (रचनासमयः १५२०-१५७०ख्री.) स्वकृतनित्याचारप्रदीपे कालिदासचयनिनः नाम इत्युद्धृतवान् । तस्मात्तस्य रचनासमयः ख्रीष्टीयपञ्चदशशताब्दी भवेदित्यनुमीयते ९ ।

सन्दर्भटिप्पणी-

१.म.स्मृ- २/१
२. धर्मशास्त्रनिबन्धकुसुमाञ्जलिः-पृ-७४
३. श्री देवयानः- पृ-४२
४. उत्कलीयधर्मशास्त्रकाराः- पृ- २०४
५. श्री देवयानः- पृ-१९
६. वाचस्पति-सौरभम्- पृ- १४०
७-उत्कलीयधर्मशास्त्रकाराः- पृ- २०४
८-History ofDharmashastra, Vol-I, Part-II, Page- 1167
९- ओ. शं.ले.ले., पृ- २६

शोधच्छात्रा, धर्मशास्त्रविभागः
सदाशिवपरिसरः, पुरी

◆◆◆

एम.सचिन्

धर्मार्थकाममोक्षाख्येषु चतुर्षु पुरुषार्थेषु धर्मः प्रधानः । धर्मप्रतिपादकं शास्त्रं धर्मशास्त्रमुच्यते । धर्मशास्त्रं मुख्यतः पुरुषार्थचतुष्टयं प्रतिपादयति । तेषु सर्वेषु पुरुषार्थेषु मनुष्यजीवनस्य मार्गप्रवर्तकरुपेण तथा नियन्त्रकरुपेण धर्मस्य प्राध्यान्यं स्वीक्रियते । जीवनस्य सर्वेषु कालेषु धर्मस्य प्रभावः साक्षात् परम्परया वा दृश्यते । पुरुषार्थेषु पुरुषस्य प्रवृत्तिः सुखायैव भवति । जीवमात्रस्य आशयअभीष्टमेव सुखम् । तस्मात् धर्मार्थकामाः पुरुषार्थाः प्रथमतः आहरणीयाः । अनन्तरं स्वतः एव मोक्षः लभ्यते ।अर्थः यद्यपि अनर्थस्य कारणं तथापि धर्मेणोपार्जितोऽर्थः मनुष्यं सर्वविधानन्देन संयोज्य परवर्तिजीवनमपि सुखमयं करोति धर्मशास्त्रम् ।

मनुयाज्ञवल्क्यादिभिः महर्षिभिः प्रणीतमिदं धर्मशास्त्रं समाजस्योपकारायैव प्रवर्तते । अतोऽस्य शास्त्रस्य महानादरः परिलक्ष्यते । सर्वेषां धर्मशास्त्रग्रन्थानां प्रवर्तनं धर्ममार्गस्य प्रतिपादनार्थमेव । अतः सर्वे प्रतिवेदं प्रतिशाखं प्रतिप्रदेशीय निबन्धकाराः स्मृतिकाराश्च धर्मशास्त्राणि विरचितानि सन्ति । धर्मशास्त्रस्य वाङमयः विशालं रुपं धारयति ।

तथैव मैथिलीयनिबन्धकारेषु म.म.बुद्धिनाथझामहोदयः अन्यतमः । म.म.महोदयेन सर्वेषां स्मृतिग्रन्थानां साराणां विविच्य स्वमतं एकस्मिन् ग्रन्थे व्यरचि । तम् ग्रन्थं स्मृतितत्त्वसाररुपेण समाजे विद्यते । अस्मिन् स्मृतितत्वसारग्रन्थे विभिन्नानां प्रसङ्गान् नीत्वा तान् वचनान् सम्यक्रुपेण संयोज्य सारः तत्व व्यरचयत स्वकीयग्रन्थे ।

अधुना स्मृतितत्वसारे विचार्य विषयेषु प्रायश्चितविषये अधुना उपस्थाप्यते । प्रथमं तु मनसि आगच्छति किं नाम प्रायश्चित्तमिति । पापक्षयमात्रसाधनत्वेन विधिवोधिते कर्मभेदे प्रायश्चितम् प्रयुज्यते । यथा - म.म.बुद्धिनाथमहोदयः दिशा । प्रथमे प्रायश्चितप्रकरणे मनुयाज्ञवल्क्यादयानां मतमुद्धरन्ति यत्-
प्राजापत्यव्रतप्रसङ्गे-

त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् ।
त्र्यहं परञ्च नाश्नीयात्प्राजापत्यविधिः स्मृतः ।। म.स्मृ. प्रा.वि.पृ-५८६

प्राजापत्यविधौ किं करणीयमित्याहु म.म.बुद्धिनाथमहोदयेन यथा- अस्या प्राजापत्यविधिः अन्य नाम वर्तते अयाचितविधिमिति। अस्मिन् विधौ नियमः कालमाधवकारेण यदुक्तं तद् म.म.झामहोदयेन स्वग्रन्थे प्रमाणग्रन्थरुपेण स्वीकुर्वन्ति ।

तदनन्तरं विभिन्नानां व्रतानां तथा प्रायश्चितानां विषये स्वग्रन्थे स्मृतितत्त्वसारे उल्लेखयति यत्- यथा- महासान्तपनं, कृच्छ्रपादः, चान्द्रायणं, शिशुचान्द्रायणं, यतिचान्द्रायणं, सोमयानं इत्यादि व्रतानां विधानम् तथा उपादेयता विषये सम्यक् विवेचना कृतम् । अन्ये व्रतानि तथा महासान्तपनं, कृच्छ्र-सान्तपनं, अतिकृच्छ्,



तत... पराकं इत्यादिनां वर्णना स्मृतिसारग्रन्थे परिदृश्यते । उदाहरणदृष्ट्या मया उपस्थाप्यते-

यत्रात्मनो प्रमत्तस्य द्वादशाहभोजनम् ।
पराको नाम कृच्छ्रोऽयं सर्वपापप्रणोदनः ।। म.स्मृ.११.२१५

परा...म- परं अत्यन्तं अकं दुःखं उपवासादिजन्यशारीरिकादिवलेशो यत्र तम् पराकः इति ख्यातः । त... विभिन्नानां व्रतानां विषय पुङ्खानुपुङ्खः रुपेण यथामति व्यरचि । ततःपरं यथा यावल्क्यादि स्वग्रन्थे कर्म...विपाकः विषये वर्णनां दृश्यते तथैव म.म.बुद्धिनाथझामहोदयेन स्वकीयग्रन्थे कर्मविपाकस्य किञ्चित् त...मुपस्थापनं कृतम् ।यथा-

रवौ दुःखं,सुखं सोमे कुजे मृत्यु वुधे जयः ।
मानं हन्ति गुरोवरि शुक्रे शुक्रक्षयो भवेत् ।।

ए...कारेण म.म.बुद्धिनाथझामहोदयः स्वस्मृतितत्त्वसारे ग्रन्थे संगृह्य विभिन्नानां स्मृतिग्रन्थानां प्रमाणवचनानां सार...प्रत्यक्षरुपेण प्रस्फुटित भवति । अतोऽयं ग्रन्थः समाजस्योपादयकः रुपेण जनानां समुखे ग्रन्थकर्ता उप...प्यते ।

सन्दर्भग्रन्थानां विवरणम्-
१.मनुस्मृतिः
२.याज्ञवल्क्यस्मृतिः
३.स्मृतितत्त्वसारः-म.म.बुद्धिनाथझा
४.धर्मशास्त्रस्योतिहासः- प्रो.जयकृष्णमिश्रः

शोधछात्रः



## आपस्तम्बोक्तब्रह्मचर्याश्रमे अग्निपरिचरणविधिः

प्रमोदकुमारसाहुः

धर्मार्थकाममोक्षेषु चतुर्षु पुरुषार्थेषु धर्मः प्रधानः। स एव धर्मः जनैः धारणादाचरणात् स्वसंज्ञां सार्थकीकरोति। कदाचिदसौ धर्मः जनैः ध्रियते कदाचिद् वा स्वयं जनान् धारयति इत्येवास्य अभिप्रायः । असौ धर्मः जनान् स्वस्वकर्मसु कर्त्तव्येषु च सुव्यवस्थितं करोति। अत एवास्य महत्त्वं सर्वजनविदितम्। 'धृङ्' धारणपोषणयोरित्यस्माद् धातोः 'मन्' प्रत्यये कृते धर्मशब्दस्य निर्वचनं व्याकरणे पाणिनिना

कृतम्। वैदिकसाहित्येऽयं धर्मशब्दः कदाचित् पुंलिङ्गेन नपुंसकलिङ्गेन वा व्यवहृतः। यथा ऋग्वेदस्य -

'यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।'

सूत्रकारेण गौतमेन[२] धर्मस्य मूलं वेद इति स्वीकृतम्।

वैदिककालादारभ्य अद्यावधि ऋषयः धर्मस्य प्रमाणानि स्वस्वग्रन्थेषु रचितवन्तः। यद्यपि वेदेषु धर्मविषयकप्रमाणानि स्पष्टतया न विद्यन्ते, तथापि तत्र प्रासङ्गिकनिर्देशोऽवश्यं प्राप्यते। तत्रादौ सकलस्मृतिकारेषु ललामभूतेन धर्मशास्त्रकारेण मनुना धर्मस्य प्रमाणत्वेन वेदं स्वीकृत्यापि पुनः स्मृतिसदाचारात्मतोषाः त्रयः धर्ममूलत्वेन प्रतिपादिताः। एतेषां चतुर्णां धर्ममूलानां प्रामाण्यं स्वीकृत्य सर्वे स्मृतिकाराः धर्मलक्षणानि कृतवन्तः। यथाह मनुः[३]-

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च।।

मनुमहर्षेरनन्तरं स्मृतिकारेषु सम्मानास्पदः स्मृतिकारः याज्ञवल्क्यः धर्मलक्षणे तान्येव प्रमाणानि स्वीकृतवान्। वेदस्मृतिसदाचारआत्मतुष्टिषु धर्मप्रमाणेषु याज्ञवल्क्यः वेदमेव मूलरूपेण स्वीकरोति। यथा[४]-

श्रुति स्मृति सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्।।

यतो हि वेदानुमापकत्वेन स्मृत्याचारात्मतुष्ट्यादीनां प्रामाण्यं स्वीक्रियते। यत्र वेदो नास्ति तत्र धर्मशास्त्रस्य प्रामाण्यं स्यात्। धर्मशास्त्रस्याभावे आचारस्य च प्रामाण्यत्वेन स्वीक्रियते। परन्तु यत्र वेदयोः मध्ये धर्मशास्त्रयोः मध्ये वा विरोधः सञ्जायते, तत्र तुल्यबलविरोधे विकल्पः इति गौतमनियमानुसारं[५] विकल्पव्यवस्था स्वीक्रियते। विकल्पे च आत्मतुष्टिरेव प्रमाणम्।

आपस्तम्बोऽपि[६] धर्मज्ञानां देशकालव्यक्तिभेदेन आचरणं धर्मप्रमाणत्वेन स्वीकरोति वेदविदां व्यवस्थाविशेषः समयः। धर्मज्ञाः ये मन्वादयस्तेषां समयः प्रमाणं धर्माधर्मयोः बौधायनहारितौ अपि धर्मे श्रुतेः प्राधान्यं स्वीकृत्यानन्तरं स्मृतेः प्रामाण्यं प्रतिपादयतः। बौधायनः[७] 'उपदिष्टो धर्मः प्रतिवेदम्'। स्मार्तो द्वितीयः। तृतीयः शिष्टाचारः। यथा हारितः[८]-

'श्रुतिप्रमाणको धर्मः तदभावे स्मृतिः।'

गौतमस्तु शीलमपि तृतीयमिति प्रतिपादयति। एषु कश्चिदपि आत्मतुष्टिं प्रमाणत्वेन न स्वीकरोति।

नानालक्षणविशिष्टः धर्मः आचरणदृष्ट्या बहुभिः बहुधा विभक्तः। स्मृतिः नाम धर्मशास्त्रम्। श्रुतिः नाम प्रत्यक्षं वेदः, ऐहिह्यम् इतिहासः, अनुमानं सदाचारश्चेति। एतच्चतुष्टयं धर्मे प्रमाणम्। धर्मः मुख्यतः द्विविधः। मत्स्यपुराणे[९] धर्मः श्रौतस्मार्त्तभेदेन द्विधा विभज्यते। यथा-

दारग्निहोत्रसम्बन्धमिज्या श्रौतस्य लक्षणम्।
स्मार्त्तो वर्णाश्रमाचारो यमैश्च नियमैर्युतः।।

न प्राणबाधमाचरेत् ।। मनु. ४/५४





माधवाचार्येणाऽपि[१०] धर्मः श्रौतस्मार्त्तभेदेन द्विधा स्वीकृतः। श्रौतधर्मे वैदिकसंहितायां ब्राह्मणग्रन्थेषु च वर्णितानां दर्शपौर्णमासादियज्ञानां समावेशो भवति। स्मार्त्तधर्मे विशेषतः स्मृतिप्रतिपादिताः वर्णाश्रमसम्बन्धिशौचाचमननियमाः अन्तर्भूताः। याज्ञवल्क्यस्मृतेः प्रमुखटीकाकारः विज्ञानेश्वरः[११] धर्मं षोढा विभजते। यथा- वर्णधर्मः, आश्रमधर्मः, वर्णाश्रमधर्मः, गुणधर्मः, निमित्तधर्मः, साधारणधर्मश्चेति।

हेमाद्रिरपि[१२] भविष्यपुराणदृष्ट्या धर्मं षड्भागेन विभज्यते। तत्र वर्णधर्मः यथा- ब्राह्मणो नित्यं मद्यं वर्जयेदित्यादिः। आश्रमधर्मो अग्नीन्धनभैक्ष्यचर्यादिः। वर्णाश्रमधर्मो ब्राह्मणः ब्रह्मचारी पलाशदण्डं गृह्णीयात्। गुणधर्मे राज्ञः प्रजापालनं तथा व्यवहारदर्शनम्, निमित्तधर्मः यथा विहितस्याननुष्ठाने प्रतिषिद्धकर्मकरणे च प्रायश्चित्तम्। साधारणधर्मः अस्तेयाहिंसादयः।

'शतायुर्वै पुरुषः' इति वेदवाक्यानुसारेण पुरुषस्य समग्रमायुः शतं वर्षाणि अवधार्यते। मनुष्यस्य जीवनं चतुर्धा विभक्तम्। ते भागाः आश्रमपदेन उच्यन्ते। ते यथा- ब्रह्मचर्याश्रमः, गृहस्थाश्रमः, वानप्रस्थाश्रमः, संन्यासाश्रमश्चेति। चतुर्षु आश्रमेषु ब्रह्मचर्याश्रमस्य स्थानं अतीवमहत्त्वपूर्णम्। ब्रह्म ज्ञानं आचरति तपो वा अर्जयतीति ब्रह्मचारी। ब्रह्मचारी यस्मिन् आश्रमे निवसति सः ब्रह्मचर्याश्रमः। अतः आपस्तम्बधर्मसूत्रे चतुर्णां वर्णानां चतुर्णामाश्रमिणां च कर्त्तव्यानि विस्तरशः प्रतिपादितानि सन्ति। तत्र ब्रह्मचर्याश्रमे ब्रह्मचारिणः यानि यानि कर्त्तव्यानि अनुतिष्ठेयुः तानि सर्वाणि ब्रह्मचारिधर्मनाम्ना उच्यन्ते। ब्रह्मचारिणां विविधकर्मसु अग्निपरिचरणविधिः मया उपस्थाप्यते।

अग्निपरिचरणविधिः-

ब्रह्मचारिणः प्रमुखेषु कर्तव्येषु अग्निपरिचरणम् अन्यतमं भवति। अतः ब्रह्मचारी प्रत्यहं अग्नौ सायं प्रातः समिद्धोमानुष्ठानं कुर्यात्। गृह्यसूत्रेऽपि[१३] प्रत्यहं अग्निकर्मणः विधानं भवति। यथा मनुस्मृतौ[१४] अपि कथ्यते यत्-

उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः।
आचारमग्निकार्यं च संध्योपासनमेव च।।

अर्थात् गुरुः शिष्यमुपनीय प्रथमम्, वक्ष्यमाणं शौचम्, स्नानाचमनाद्याचारम्, अग्नौ सायम्प्रातः समिद्धोमानुष्ठानम्, समन्त्रकसंन्ध्योपासनाविधिं च शिक्षयेत्। अतः ब्रह्मचारी स्नानकर्माद्यनन्तरं शुचिः भूत्वा सन्ध्योपासनं कुर्यात्। तदनु अग्निकार्यं कुर्यात्। अपि च नित्यं अरण्यात् समिद्धमाहृत्य समिद्धोमानुष्ठानं कुर्यात्[१५]। तथा च पञ्चमहायज्ञानुष्ठानं कुर्यात्।

होमविधानम्-

ब्रह्मचारी प्रत्यहं स्वाध्यायाध्ययनानन्तरं अग्नौ समिधाप्रक्षेपणं अवश्यं कुर्यात्। तत्र समिद्धार्थं प्रत्यहं अरण्यात् शुष्कानि काष्ठानि चाहरेत्। आहृत्य च अधो स्थापयेत्। यथा आचार्यपुत्रादीनां बालानां पतनशङ्का न भवेत्। गोपथब्राह्मणेपि[१६] उच्यते यत्-

नैकः सुप्याच्छून्यगेहे ।। मनु. ४/५७

कृतम्। वैदिकसाहित्येऽयं धर्मशब्दः कदाचित् पुंलिङ्गेन नपुंसकलिङ्गेन वा व्यवहृतः। यथा ऋग्वेदस्य -

'यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।'

सूत्रकारेण गौतमेन[२] धर्मस्य मूलं वेद इति स्वीकृतम्।

वैदिककालादारभ्य अद्यावधि ऋषयः धर्मस्य प्रमाणानि स्वस्वग्रन्थेषु रचितवन्तः। यद्यपि वे धर्मविषयकप्रमाणानि स्पष्टतया न विद्यन्ते, तथापि तत्र प्रासङ्गिकनिर्देशोऽवश्यं प्राप्यते। तत्रादौ सकलस्मृतिका ललामभूतेन धर्मशास्त्रकारेण मनुना धर्मस्य प्रमाणत्वेन वेदं स्वीकृत्यापि पुनः स्मृतिसदाचारात्मतोषाः ऋ धर्ममूलत्वेन प्रतिपादिताः। एतेषां चतुर्णां धर्ममूलानां प्रामाण्यं स्वीकृत्य सर्वे स्मृतिकाराः धर्मलक्षणानि कृतवन्त यथाह मनुः[३]-

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च।।

मनुमहर्षेरनन्तरं स्मृतिकारेषु सम्मानास्पदः स्मृतिकारः याज्ञवल्क्यः धर्मलक्षणे तान्येव प्रमाणा स्वीकृतवान्। वेदस्मृतिसदाचारआत्मतुष्टिषु धर्मप्रमाणेषु याज्ञवल्क्यः वेदमेव मूलरूपेण स्वीकरोति। यथा[४]-

श्रुति स्मृति सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्।।

यतो हि वेदानुमापकत्वेन स्मृत्याचारात्मतुष्ट्यादीनां प्रामाण्यं स्वीक्रियते। यत्र वेदो नास्ति तत्र धर्मशास्त्रस्य प्रामाण्यं स्यात्। धर्मशास्त्रस्याभावे आचारस्य च प्रामाण्यत्वेन स्वीक्रियते। परन्तु यत्र वेदयोः मध्ये धर्मशास्त्रयोः मध्ये वा विरोधः सञ्जायते, तत्र तुल्यबलविरोधे विकल्पः इति गौतमनियमानुसारं[५] विकल्पव्यवस्था स्वीक्रियते। विकल्पे च आत्मतुष्टिरेव प्रमाणम्।

आपस्तम्बोऽपि[६] धर्मज्ञानां देशकालव्यक्तिभेदेन आचरणं धर्मप्रमाणत्वेन स्वीकरोति वेदविदां व्यवस्थाविशेषः समयः। धर्मज्ञाः ये मन्वादयस्तेषां समयः प्रमाणं धर्माधर्मयोः बौधायनहारितौ अपि धर्मे श्रुतेः प्राधान्यं स्वीकृत्यानन्तरं स्मृतेः प्रामाण्यं प्रतिपादयतः। बौधायनः[७] 'उपदिष्टो धर्मः प्रतिवेदम्'। स्मार्तो द्वितीयः। तृतीयः शिष्टाचारः। यथा हारितः[८]-

'श्रुतिप्रमाणको धर्मः तदभावे स्मृतिः।'

गौतमस्तु शीलमपि तृतीयमिति प्रतिपादयति। एषु कश्चिदपि आत्मतुष्टिं प्रमाणत्वेन न स्वीकरोति।

नानालक्षणविशिष्टः धर्मः आचरणदृष्ट्या बहुभिः बहुधा विभक्तः। स्मृतिः नाम धर्मशास्त्रम्। श्रुतिः नाम प्रत्यक्षं वेदः, ऐहिह्यम् इतिहासः, अनुमानं सदाचारश्चेति। एतच्चतुष्टयं धर्मे प्रमाणम्। धर्मः मुख्यतः द्विविधः। मत्स्यपुराणे[९] धर्मः श्रौतस्मार्तभेदेन द्विधा विभज्यते। यथा-

दारग्निहोत्रसम्बन्धमिज्या श्रौतस्य लक्षणम्।
स्मार्तो वर्णाश्रमाचारो यमैश्च नियमैर्युतः।।

न प्राणबाधमाचरेत् ।। मनु. ४/५४

'तस्मात् ब्रह्मचार्यहरहस्समिध आहृत्य सायं प्रातग्नि परिचरेत्, नोपर्युपसादयेत् अधः प्रतिष्ठापयेत्' इति।

चोरव्याघ्रादिसम्भवात् अस्तमिते आदित्ये समिध आहर्तुं न गच्छेत्। अग्निः परितः प्रत्यहं मार्जनं परिष्करणं च ब्रह्मचारी विदध्यात्। गृहाग्नौ विहितं कर्म ब्रह्मचारी यथायथं सम्पादयेत्[17]। एके आचार्या मन्यन्ते यत् केवलं सायमेव अग्निपूजा कार्या, न तु प्रातः इति। समिधाधाने समिद्धमाग्निं पाणिना एव परिसमूहेत् प्राक्समिदाधानात् परिसमूहने यथाकामी भवति। अग्निपरिचरणे, परिसमूहने, परिषेचने, चोपयुक्तमुदकम् वृथाकर्मणि अदृष्टप्रयोजनरहितानि पादप्रक्षालनादिकर्माणि न समाचरेत्[18]।

पञ्चमहायज्ञानुष्ठानम्-

ब्रह्मचारिणः आचार्यकुले स्वाध्यायाध्ययनं प्रत्यहं कर्त्तव्यम्। तत्र स्वाध्यायादनन्तरं पञ्चमहायज्ञानुष्ठानं ब्रह्मचारी अवश्यं कुर्यात्। अतः पञ्चमहायज्ञाः यथा- ब्रह्मयज्ञः, देवयज्ञः, पितृयज्ञः, भूतयज्ञः, मनुष्ययज्ञश्चेति एते महायज्ञाः महासत्राणेति कथ्यते[19]। शतपथब्राह्मणेपि[20] कथ्यते यत् पञ्चैव तान्येव महासत्राणीति।

तत्र नित्यस्वाध्यायः भवति ब्रह्मयज्ञः। देवेभ्यः स्वाहाकारेण प्रदानम् आकाष्ठात् अशनीयाभावे काष्ठम् तावद्देयम्। वैश्यदेवोक्तप्रकारेणैवेष देवयज्ञः। पितृभ्यः स्वधाकारेण प्रदानम् ओदपात्रम् अन्नाद्यभावे उदकपात्रम् स्वधाकारेण तावद्देयम्। पात्रग्रहणात् सह पात्रेण देयम्- एष पितृयज्ञः[21]। वैश्यदेवे वक्ष्यमाणेन बलिहरणप्रकारेण भूतेभ्योऽहरहर्भूतबलिर्देयः, एष भूतयज्ञः। मनुष्येभ्यश्च यथाशक्ति दानं कर्त्तव्यम्। एष मनुष्ययज्ञः[22]। अतः ब्रह्मचारी प्रत्यहं पञ्चमहायज्ञान् अनुतिष्ठेत्।

पादटिप्पणी

१.ऋ.वे.सं.१.१६४.५०
२.गौ.ध.सू.१.१.१
३.मनु.स्मृ.२.६
४.या.स्मृ.१.७
५.गौ.ध.सू.१.१.५
६.आ.ध.सू.१.१.२,३
७.बौ.ध.सू.१.१.२-४
८.हारीत.मन्व.मु.२.१
९.मत्स्य.पु.१४४.३०-३१
१०.परा.माध.१.६४
११.या.स्मृ.मिता.१.१
१२.हेमाद्रि.व्रतखण्डे.१.४
१३.आप.गृ.११.२२
१४.मनु.स्मृ.२.६९
१५.आ.ध.सू.१.१.४.१४
१६.गो.ब्रा.१.२.६
१७.आ.ध.सू.१.१.४.१६
१८.आ.ध.सू.१.१.४.२०
१९.आ.ध.सू.१.४.१२.१४
२०.शतपथे.११.५.६.१
२१.आ.ध.सू.१.४.१३.१
२२.आ.ध.सू.१.४.१२.१५

शोधच्छात्र
धर्मशास्त्रविभागः, श्रीसदाशिवपरिसर, पुरी

◆◆◆





## दत्तकाशौचम्

अंकित दाधीच

आशौचं नाम शुचेरभावः आशौचं नाम शुचेर्भावः शौचमिति भावप्रत्ययान्तशौच शब्दस्य नञ् समासे नञः शुचीश्वरेत्यादिपाणिनि सूत्रेण वैकल्पिक्यापूर्ववदादिवृद्ध्या निष्पन्नत्वादाशौच शब्दस्य न शौचमशौचमिति व्युत्पत्या शौचाभावोऽर्थः पुनः शौचमित्यनेन पापक्षय इत्यर्थः ग्रहीतः अनेनाशौचं नाम पापमित्यर्थः पर्यवसति पापक्षयाभावात् तच्चाप्ययुक्तम् यतोहि जैमिनिना चोदनालक्षणोऽर्थो धर्मः इति सूत्रेण धर्मलक्षणं प्रतिपाद्य अनर्थोऽधर्मः इति सूचितः स च अनिष्टिसाधनम् तथा च अनर्थो नाम योऽनभ्युदयाय इत्यानेन पापधर्मशब्दौ पर्यायौ इति लभ्यते तथा च पापाभावयुक्तस्यास्याशौचशब्दस्य अनिष्टसाधनताबोधकविधिवाक्याभावात् न अधर्मता अथ कर्मानधिकारोऽशुद्धि कर्माधिकारः शुद्धी त्यर्थग्रहणात् तदपि न यतोहि तथा सति 9आशौचे दानप्रतिग्रहस्वाध्याया निवर्तन्ते, न च दानाद्यनधिकार एवाऽऽशौचमिति वाच्यम् तथा च न कर्ममात्रनाधिकार आशौचिनामप्युदकदानाधिकार प्रतिपादनात् तथैव च कर्मविशेषानधिकारोऽऽशौचं ब्राह्मणादिनां राजसूयाद्यनधिकारात् अतः कालस्नानव्यतिरिक्त यत् पिण्डोदकदाने हेतुत्वेन तथा च अध्ययनादेः निषेधस्य यत् कारणत्वेन विद्यते तदाशौचम् आशौचं नाम स्मृतिविहिततत्कर्मानधिकारत्वसम्पादकः कश्चन पुरुषगत अतिशयविशेषः प्रसङ्गेऽस्मिनुक्तम् :-

कालस्नानाद्यपनोद्यः पिण्डोदकदानादिविधेर्हेतुभूतोऽध्ययनादिपर्युदासस्य च निमित्तभूतः पुरुषगतः कश्चनातिशय

आशौचम्

तच्चाशौचं द्विविधम् जननाशौचं मरणाशौचञ्च यथोक्तम् :-

आशौचं द्विविधं कर्मानधिकारलक्षणम्
जनने मरणे च नित्यमाशुच्यमनुधावति

तच्चाशौचं ब्राह्मणादिक्रमेण दश , द्वादश , पञ्चद्वादश मासात्मको भवति

त्रिरात्रं दशरात्रं वा शावमाशौचमिष्यते

याज्ञवल्क्यः-

दशाहं शावमाशौचं सपिण्डेषु विधीयते
क्षत्रस्य द्वादशाहानि विशः पञ्चदशैव तु
त्रिंशद्दिनानि शूद्रस्य तदर्धं न्यायवर्तिनः

तथा च स्वकर्मनिरतानां ब्राह्मणादीनामाशौचकालः विशेषेण प्रतिपादितः अर्थात् ये ब्राह्मणादयः वेदप्रतिपादितकर्मानुष्ठानरताः भवन्ति तेभ्यः काले न्यूनत्वं प्रदर्शितम् यथा पराशरः :-

क्षत्रियस्तु दशाहेन स्वकर्मनिरतः शुचिः
तथैव द्वादशाहेन वैश्यः शुद्धिमवाप्नुयात्

तदाशौचं नित्यानित्यद्व्यामुष्यायाणन्वितेषु त्रिविधदत्तककेष्वादौ शुद्धदत्तकनिरूपितजनककुले

जनककुलनिरूपितशुद्धदत्तके मिथः न भवतीति विषयेऽस्मिन् मनुवचनं प्रमाणत्वेन उपस्थापयन्ति धर्मशास्त्रकाराः:-

गोत्ररिक्थे जनयितुर्थभजेदत्रिमः सुत

गोत्ररिक्थानुगः पिण्डो व्यवैति ददतः स्वधा

अस्यार्थः जनकसम्बन्धितं गोत्ररिक्थं दत्तकः प्राप्नोति तथा च गोत्ररिक्थं भजते तस्यैव पिण्डो तेन दीयते अत्रोपस्थापितमनुवचनेन पिण्डस्वधाशब्दाभ्यां पितृकर्मोपलक्ष्यते ततश्च पिण्डदानादिहेतुभूतयोर्गोत्ररिक्थयोः निवृत्ति कथनेन आशौचनिवृत्तिरप्युक्ता यतोहि यावदाशौचं तावत्प्रेतोदकं पिण्डमेकं दद्यु इति सूत्रबलात् प्रेतपिण्डदानं आशौचञ्च आशौचपूर्वकमेव अर्थात् आशौचव्यवस्थानुगुणमेव प्रेतपिण्डदानव्यवस्था प्रतिपादिता वर्तते अतः यत्र परस्परं प्रेतपिण्डदानं तत्राऽऽशौचित्वं यत्र आशौचित्वं तत्र प्रेतपिण्डदानम् अत्र समव्याप्तिस्थले सनियोगशिष्टानामन्यतरापाय उभयोरव्यपायः इति न्यायेन प्रेतपिण्डदाननिवृत्ते , आशौचनिवृत्तिः भवति तस्मात् शुद्धदत्तकस्य जनककुले मिथ आशौचं नास्ति मयूखकारेणोक्तं दत्तकस्य मरणे जनकादेर्जनकादिमरणे दत्तकस्य नाशौचम् विषयोऽयं शङ्करशास्त्रीणा दत्तकचन्द्रिकाग्रन्थस्य टीकायामुक्तम् दृष्टान्तमुपस्थाप्य विवेचितः जातपुत्रः कृष्णकशोऽग्निनादधीत इत्यत्र वसन्ते ब्राह्मणोऽग्नीनादधीतेति वाक्यान्तरप्राप्तस्याऽऽधानस्य कर्तारमुद्दिश्य जातपुत्रत्वकृष्णकेशत्वरूपधर्मद्वयविधाने वाक्यभेददोषाद् तादृशपदद्वयेन लक्षणया युवत्वरूपोऽवस्थाविशेषो लक्ष्यते तत्र जातपुत्रपदं शैशवावस्थानिवर्तकम् कृष्णकेशत्वं च वृद्धत्वावस्थानिवर्तकम् अनेनैव प्रकारेण लक्षितकार्यमात्र निवृत्त्याऽऽशौचस्यापि निवृत्तिः सिद्धयति अतः प्रकृतस्थलेऽपि पिण्डदानाशौचादया पितृकर्मावबुध्यते तथा च 'यत्र पिण्डोदकदाननिवृत्तिः' तत्र आशौचिनिवृत्तिः अन्यथा यावद्वचनं प्रमाणं इत्यनेन पह्नितांशानां निवृत्तिः मन्ये तर्हि परस्पर सम्बन्धापति भवति

अत्र प्रश्नः समुदेति यत् शुद्धद्तकस्य जनककृते परस्परमाशौच मा भूत तथाऽपि बीज निमित्ताद् बैजिकोऽपि आशौचं प्राप्नोति यतोहि सपिण्डतादि सम्बन्धासत्वेऽपि बीजं रेतः सम्बन्धो हेतुर्यत्रापत्यत्पत्तौ अतः बीजसम्बन्धादेव त्रिदिनमाशौचं स च शुद्धदत्तके जनकस्य पितुर्बीजकृतसम्बन्धादुत्पन्नः त्र्यहाशौचम् गौत्ररिक्थे इत्यस्मात् मनुवचनात् परास्तम् यतोहि दशाहशावमाशौचं सपिण्डेषु विधीयते इति सपिण्डतादिसम्बन्धनिमित्तं दशाहं शावमाशौचं अनेन मनुवचनेनापोद्यत पुनः मरीचिवचनं पूर्वपक्षत्वेनोपस्थापयति परपूर्वः पर्तिर्यस्याः सा परपूर्वा तस्यामपत्योत्पत्तौ सत्यामुत्पादयितुर्न कश्चित् सपिण्डादिसम्बन्धः परं बिजकृतसम्बन्धः तत्र दृश्यते अतः बैजिकादिभिः सम्बन्धादनुरुन्ध्यादधं त्र्यहम् इत्यनेन वचनेन त्र्यहाशौचं विधीयते सम्बन्धोऽयं स्थले द्वेषं दृश्येते आदौ शुद्धदत्तके तथा परेण परवत्यन्यामुत्पादिते पुत्रे अत्र बीजसम्बन्धाद् परस्परमाशौचम् यथोक्तम् :-

सूतके मृतके चैव त्रिरात्रं परपूर्वयो

एकाहरस्तु सपिण्डानां त्रिरात्रं यत्र वैः पितुः

अत्र परः पूर्वः पतिर्यस्याः सा परपूर्वा तथा च परः पूर्वः पिता यस्य दत्तकादेः पुत्रस्य स परपूर्वः इत्यर्थः अतः एतास्माद्वचनात् त्र्यहाशौचं सिद्धयति बीजवपतुः किन्तु दत्तकग्रहणकाले सङ्कल्पबलात् तथा च गोत्ररिक्थ इति



मनुवचनात् गोत्रनिवृत्तिरुक्ता तथा पिण्डदाने गोत्रस्योपादेयता विद्यते तथा च यत्र पिण्डत्वं तत्राशौचित्वमिति सन्निष्टयोगन्यायेन पूर्वं प्रतिपादितम् , अतः पिण्डनिवृत्तेः गोत्रपिण्डनिमित्तकमाशौचमपि निवर्तते आशौचस्य पिण्डानुसारित्वात् यथोक्तम् :-

सपिण्डता तु विज्ञेया गोत्रतः सप्तपौरुषी

पिण्डश्चोदाकदानं च शौचाशौचं तदानुगम्

तच्च प्रतिग्रहितृकुले त्रिरात्रमाशौचम् अत्र प्रतिग्रहीतृकुलस्य पिता पितामहप्रपितामहेति ग्राह्याः प्रतिग्रहितृपित्रादिनां दत्तकमरणे त्रिरात्रमाशौचम् इति नन्दपण्डितेन वाक्यमिदं प्रतिपादितम् आदिपदोदिते वाक्येऽस्मिन् आदि पदेन क्षत्रजादयः पुत्रा ज्ञातव्याः यथोक्तम् :-

दत्तकश्च स्वयं दत्तः कृत्रिमः क्रीत एव च

अपविद्धश्च ये पुत्रा भरणीयाः सदैव ते

भिन्नगोत्राः पृथक्पिण्डाः पृथक्वंशकराः स्मृताः

जनने मरणे चैव त्र्यहाशौचस्य भागिनः

अत एतेषां मरणे पालकपितृपितामहप्रपितामहानां त्रिदिवसात्मकमाशौचं भवतीत्यर्थः तत्रैव प्रमाणत्वेन बृहस्पतिवचनमुपस्थापयति दत्तकमीमांसायाः टीकाकारः :-

अन्याश्रितेषु दारेषु परपत्नी सुतेषु च

मृतेष्वाप्नुत्य शुध्यन्ति त्रिरात्रेण द्विजोत्तमाः

अत्र प्राधान्याद् द्विजोत्तमग्रहणात् न तु द्विजोत्तमस्यैव विधानमत्र क्रियते अतः अनेन वाक्येन क्षत्रियादयः शूद्रान्ता अप्येवं शुद्धाः भवन्ति इति ज्ञातव्यः तथा च आशौचमिदं कस्येति शङ्कायामुच्यते पुनार्भ्वां यन्निश्चयितं भार्यत्वं तथा च दत्तककादिषु यन्निरूपितं दत्तकादिपुत्रत्वं तस्यैव निरूपकस्य तदाशौचं भवति इत्यनेन पालकस्यैव त्रिरात्रमाशौच न तु पितामहादीनामिति केचन वदन्ति अत्र निश्चयस्यैव इत्यनेन प्रतिग्रहीतुः पितृपितामहयोर्व्यावृत्तिः भवति परन्तु प्रतिग्रहादीत्रयाणां त्र्यहाशौच इति मन्यमानानां आशयोऽयम् यन्निर्वाप्य पिण्डान्वयेनेव सापिण्ड्यं न तु शरीरावयवान्वयेन अर्थात् यत्र निर्वाप्यपिण्डान्वयः तत्रैव एषा व्यवस्था भवति पालकगोत्रग्रहणात् तच्च सपिण्डं त्रिपुरुषम् तथा च व्यामुष्यायण स्थले तूभयत्र सापिण्ड्यं गोत्रद्वयसम्बन्धत्वात् तच्च दशाहं शावमाशौचं सपिण्डेषु विधीयते इत्यस्माद् वचनात् दशाहमाशौचं प्राप्नोति तदपवादरूपेण 'उत्सर्गसमादेशा अपवादाः' इति न्यायेन त्रिरात्रमाशौचस्य विधानं क्रियते तथा च 'यन्निरुपितं पुत्रत्वं तस्यैव' इत्यत्र प्रतिपादितेनेवकारेण न प्रतिग्रहितुः पितामहार्थोर्व्यावृति अपितु जनकपित्रादीनां व्यावृत्तिरुक्ता अतः प्रतिग्रहीतृपित्रादीनां त्रयाणां त्रिरात्रमाशौचम् भवति तथा च त्रिपुरुषानन्तरवर्तिनां प्रपितामहादीनां त्रयाणां सकुल्यानां एकाहाशौचम् यथोक्तम् :-

सूतके मृतके चैव त्रिरात्रं परपूर्वयो

एकाहरस्तु सपिण्डानां त्रिरात्रं यत्र वैः पितुः

तथैव दत्तकपुत्रादिषु मरणे सगोत्रिण: समानोदकाश्च स्नानमात्रेण शुद्ध्यन्ति तथा अन्याश्रीतभार्या–परमेऽपि स्नानमात्रेण शुद्धा: भवन्ति यथोक्तम् :-

अन्याश्रितेषु दारेषु परपत्नी सुतेषु च
गोत्रिण: स्नानशुद्धा: स्तुस्त्रिरात्रेणैव तत्त्ववित्

शुद्धदत्तकपुत्रस्य जनने मरणे च एतादृश्याशौच व्यवस्था ज्ञातव्या द्वयामुष्यायणस्थलेपि निर्णयोऽयं प्रसज्यतेते परं तत्र कश्चन विशिष्ट: विधीयते नियम: द्वयामुष्यायणपुत्रे उभयगोत्रसम्बन्धत्त्वात् जनककुले तथा च पालककुले त्रिरात्रमाशौचं भवतीति यतोहि गौत्रद्वयसम्बन्धभागित्वं द्वयामुष्यायणत्वमिति शङ्करशास्त्रिणोक्तम् मनुना दत्तकविषये यदुपस्थापितं तद्वचनं विशिष्टेन सङ्कल्पेन स्थलेऽस्मिन् नैवोपयुज्यते यतोहि दत्तकग्रहणकाले दाता सङ्कल्पपूर्वकं वदति 'आवयोरयंमौरस:' अनेनैव वचनेन अत्र गोत्रसम्बन्ध: प्रवर्तते तथा च गोत्रं स्वीकरोति स: पिण्डं व्यपेति तथा च यत्र पिण्डत्वं तत्राशौचित्वम् अत: द्वयामुष्यायणदत्तकेऽपि त्रिरात्रमाशौचम् आशौचमिदमस्य दत्तकस्य पुत्रेष्वपि प्रवर्तते, यतोहि नित्यद्वयामुष्यायणेऽवस्थितं गोत्रं पुत्रेष्वप्यनुवर्तते तथेदमाशौचं त्रिरात्रात्मकं असपिण्डान् असगोत्रिण: पुत्रान् भवति यथोक्तं ब्रह्मपुराणे :-

भिन्नगोत्रा: पृथक् पिण्डा

तथा च अनित्यद्वयामुष्यायणे तु त्र्यहाशौचम् भवति परन्तु यदुक्तं पूर्व जननेऽपि त्रिरात्रमाशौचं तदाशौचं अनित्यं द्वयामुष्यायणस्य पुत्रोत्पन्ने भवति यतोहि अनित्यद्वयामुष्यायणस्य जनकगोत्र तस्य पुत्रेषु नैव अन्वेति तदैव तस्य अनित्यत्वम् यथोक्तम् :- तावदेव नोत्तरसन्ततौ अत: वक्तुं शक्नुम: साररूपेण शुद्धदत्तकस्थले जनककुले आशौचाभाव: गोत्राभावात् तथा च द्वयामुष्यायणस्थले जनककुलेऽपि आशौचं भवति गोत्रभावात् अर्वाचीनहिन्दुदत्तकविधौ अनेन प्रकारेण आशौच व्यवस्था नैव प्रतिपादिता परन्तु भारतवर्षेऽस्मिन् यस्मिन्–यस्मिन् समुदायेषु या या प्रथा प्रचाल्यमाना वर्तते सा प्रथैव जनैरनुष्ठीयते अत: यस्मिन् कुले यादृश्याशौचव्यवस्था सा परिपालनीया तथा च साम्प्रतिके काले शुद्धदत्तकपुत्र: दत्तकत्वेन ग्राह्यो भवति द्वयामुष्यायण ग्रहणाभावात् तथा च प्राचीनविध्यानुगुणं प्रतिपादितंक त्रिरात्रमाशौचं नैवाङ्गी क्रियते तदस्थाने दशाहशावमाशौचं इति वचनाधारित विधि: परिपाल्यते कुत्रचित्स्थलेषु द्वयामुष्यायणदत्तक: ग्राह्यो भवति तथापि तत्र त्रिरात्रमाशौचमिति व्यवस्था नैव दृश्यते ।

सहायकाचार्य ( धर्मशास्त्र विभाग )
राष्ट्रियसंस्कृतसंस्थानम्, जयपुर परिसर







# स्मृतियों एवं भवभूति के नाटकों में वर्णित संस्कार: एक तुलनात्मक दृष्टि

डा. हिमांशुशेखर त्रिपाठी
सहायक आचार्य
श्री लालबहादुरशास्त्री राष्ट्रिय संस्कृत विद्यापीठ,
नई दिल्ली-110016

**1.1 संस्कार** - संस्कार मानव शिशु को मानवता का प्रथमोद् बोध कराते हैं। गर्भाधान से लेकर अन्त्येष्टि पर्यन्त की गयी संस्कार-विधि से मानव का मन एवं आत्मा दोनों ही शुद्ध हो जाते हैं एवं उसके भविष्य की विकासमयी परम्परा का प्रादुर्भाव होता है, यह भारतीय मनीषियों की निर्विरोध धारणा रही है। संस्कार शब्द सम् पूर्वक कृ धातु से घञ् प्रत्यय करके निष्पन्न किया जाता है। विभिन्न स्थलों पर विभिन्न अर्थों में इसका प्रयोग किया जाता है।[1] धर्मशास्त्रों में इसका तात्पर्य विधि विधान एवं धार्मिक क्रिया कलापों से लिया जाता है।

इस प्रकार यह स्पष्ट हो जाता है कि धर्मशास्त्रों में संस्कार धार्मिक आधार पर किये जाने वाले उन अनुष्ठानों से सम्बन्धित हैं जो व्यक्ति के शारीरिक, बौद्धिक तथा आध्यात्मिक विकास और शुद्धि के लिये जन्म से मृत्यु तक समयानुसार से सम्पन्न किये जाते हैं।[2]

**1.2 स्मृतियों में वर्णित संस्कार** - संस्कारो की संख्या के सम्बन्ध में प्राय: धर्मशास्त्रियों में मतैक्य नहीं है। कुछ धर्मशास्त्रों में संस्कारों की संख्या 16 मानी गयी है और कुछ में चालीस संस्कारों का वर्णन किया गया है। गौतम धर्मसूत्र में तो चालीस संस्कारों का विधान मिलता है।[3]

मनुस्मृति में गर्भाधान संस्कार से लेकर अग्नि संस्कार तक का वर्णन मिलता है। याज्ञवल्क्य स्मृति में भी केशान्त संस्कार को छोड़कर मनु द्वारा प्रतिपादित संस्कारों की चर्चा की गयी है। परवर्ती स्मृतियों में सोलह संस्कारों की चर्चा की गयी है[4] पर व्यास स्मृति में सोलह संस्कारों का ही प्रतिपादन किया गया है।[5] गौतम ने अड़तालीस संस्कारों का विवेचन किया है। किन्तु अन्त्येष्टि संस्कार का प्रतिपादन नहीं किया है। उनके मतानुसार अन्त्येष्टि संस्कार अशुभ का द्योतक है इसलिये शायद अन्त्येष्टि संस्कार का विधान नहीं किया है।[6] मनुस्मृतिकार एवं याज्ञवल्क्य के मतानुसार संस्कारों की गणना में अन्त्येष्टि समन्त्र संस्कारों में से एक है।[7] इस प्रकार धर्मशास्त्रियों ने संस्कारों के सम्बन्ध में अपने अपने मत का प्रतिपादन किया है किन्तु पूर्वापर पर्यालोचना से यह ज्ञात होता है कि संस्कारों में मुख्य रूप से षोडश संस्कार ही अधिक स्मृतिकारों द्वारा मान्य हैं तथा अभी वर्तमान समय में षोडश संस्कारों की महत्ता को ही दिखाया गया है। अत: षोडश संस्कार ही अधिक महत्त्वपूर्ण हैं। जिन षोडश संस्कारों की मुख्यता एवं महत्ता को कहा गया है वे क्रमानुसार निम्नलिखित हैं

1. गर्भाधान। 2. पुंसवन 3. सीमन्तोन्नयन 4. जात कर्म 5. नाम क्रिया 6. निष्क्रमण